# वेणीसंहारनाटकम् ।

श्रीभट्टनारायणविरचितम् ।

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यकृतटीकया समलङ्कृतम् ।

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

तथा

तदात्मजाभ्यां

पण्डित-श्री-आशुबोध-विद्याभूषण-

पण्डित-श्री-नित्यबोध-विद्यारत्नाभ्याञ्च

प्रतिसंस्कृतया व्याख्यया समलङ्कृत ताभ्यामेव प्रकाशितञ्च ।

पञ्चम संस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम् ।

इं १८२४ ।



[illegible] ।

# वेणीसंहारनाटकम्।

## प्रथमोऽङ्कः।

नान्दी।—

निषिद्धैरप्येभिर्लुलितमकरन्दो मधुकरैः
करैरिन्दोरन्तश्छुरित इव सम्भिन्नमुकुलः।
विधत्तां सिद्धिं नो नयनसुभगामस्य सदसः
प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयम्॥ १॥

---

(१) वाग्देवीं हृदये ध्यात्वा वेणीसंहारनाटकम्।
व्याख्यायते सुबोधाय श्रीतारानाथशर्मणा॥

रङ्गविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजयेदिति बोधितकर्त्तव्यताकां नान्दीमुपनिबध्नाति, निषिद्धैरित्यादि।—निषिद्धैरित्यनेन ये यथात्यन्तासक्तास्ते निवारिता अपि ततो न निवर्त्तन्ते इति ध्वनयता दुर्य्योधनादयः अत्यन्ताकार्य्यासक्ता भीष्मादिभिर्निवारणेऽपि नाकार्य्येभ्यो विरता इति सूचितम्। लुलितमकरन्दः चालितपुष्परसः, न तु आस्वादितमधुकः, निवारणेन व्याकुलतया सुखेनास्वादासम्भवात्, इन्दोः करैरन्तर्मध्ये, छुरितो लिप्त इव, इतरथाभिन्दुकरैः बाह्यमात्रस्पर्शः, पुष्पोच्चयस्य त्वत्यन्तमध्यान्तःशोभनायाञ्जलिस्थत्वमुत्प्रेक्षितं, सम्भिन्नमुकुलः विदलितमुकुलीभाव, विकासित इत्यर्थः। अञ्जलिरञ्जलिपरिमाणं, पुष्पाणामिति षष्ठी, तत्रैव परिमाणेऽन्विता, तथा च अञ्जलिपरिमितानि पुष्पाणीति वाक्यार्थः, परिमाणपरिमेययोरभेदोपचाराच्च तथा निर्देशः, अत एव च पुष्पाणां प्रकीर्णत्वमादायैव अञ्जलेः प्रकीर्णत्वसम्भवः, यथाश्रुतपक्षे अञ्जलेर्युतहस्तार्थकतया तस्य प्रकीर्णत्वासम्भवः, सूत्रधारेण नान्दीकरणसमये सपुष्पाञ्जलिना भवितव्यमिति सूचनाय चेत्थमित्युक्तम्; सदसः सदसि स्थितजनाना, नयनसुभगाम् चक्षुष्य-

अपि च ।—

कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं
गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् ।
तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गतेः
अक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ २ ॥

दर्शनद्वारा प्रीतिदा, सिद्धिमभिनेयसम्पत्तिं, विधत्तां करोतु, कवीनां निरङ्कुशत्वात् फलेगतफलाभावेऽपि तङ्। प्रार्थनायां लोट्। विधत्तादिति तातङन्तः पाठस्तु समीचीनः। केचित्तु पुष्पाञ्जलिः अयं प्रबन्धश्च एतौ हरिचरणयोः हरिचरण-मुद्दिश्य, प्रकीर्णः क्षिप्तः अर्पितश्च, सिद्धिं विधत्तां कुरुतामिति द्विवचनान्ततया व्याकुर्वन्ति, तत्र च प्रबन्धप्रतिपाद्यस्यार्थस्य लुलितमकरन्दादिकतया प्रबन्धस्य तथात्वं द्रष्टव्यम्; तथा हि, मधुना मद्येन, कीर्य्यन्ते इति काराः क्षिप्यमाणा इत्यर्थः ते दुर्य्योधनादिभिः, भीष्मादिभिर्विद्वैरपि, लुलितः चालितः, मकरन्द इव सारांश-स्थिर्य्यो यस्य, तथा शत्रुभिः पराभूतोऽपि इन्दुकिरणवत् शुद्धस्वभाव, पश्चाच्च पाण्डवानां यथातिशयात्वेन विगलितदैन्यरूपमुकुलीभावश्च नायक इति यथासम्भवं विशेषणं योज्यम्। शिखरिणीवृत्तं, "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति तल्लक्षणात्।

(२) भाविप्रबन्धात्मकनाट्योक्तस्य विवक्षितस्यार्थस्याभासं सूचयन्नाह, अपि-चेत्यादि।—केलिकुपिता कौतुके एव कुपिता, प्रणयकोपवती, रासे क्रीडाविशेषे, "रासो विदग्धगोष्ठ्यान्तु क्रीडायामपि गोदुहाम्" इति कोषात्, रसं रागम्, उत्सृज्य गच्छन्तीं राधिकामनुगच्छतः; तत्प्रकारमाह, तत्पादेत्यादि—तस्या राधायाः, पादयोः प्रतिमासु चिह्नेषु, निवेशितपदस्य तत्पादाङ्कस्पर्शेनापि कृतार्थम्मन्यमानतया तत्र पद-न्यासेऽपि तत्स्पर्शसम्बन्धाशया दत्तचरणस्य, अत एव पदाङ्कस्पर्शादपि, उद्भूतरोमोद्गतेः जातरोमाञ्चस्य, तथा रोमोद्गमदर्शनेन च "अयं मय्यत्यन्तानुरक्तः, यतो मत्पादाङ्क-स्पर्शमात्रेणास्य रोमाञ्चोदयः" इति निश्चित्य प्रसन्नया कृतप्रसादया, दयितया दृष्टस्य, अत एव अक्षुण्णः सफलः, तत्प्रसादनार्थमेवानुनयस्य आरब्धतया तत्प्रसादे च जाते अनु-नयस्य सफलतेति भावः। अत्र प्रबन्धप्रतिपाद्यानि द्रौपदीकोपरोदने मनुबधा-श्रमणं भीमकृतानुनयस्य सफलत्वं द्रौपदीप्रसादश्चेत्येतानि वस्तूनि सूचितानि। शार्दूलविक्रीडितं वृत्तं, "सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्" इति तल्लक्षणात्।

अपि च ।—

दृष्टः सप्रेम देव्या किमिदमिति भयात् सम्भ्रमाच्चासुरीभिः
शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन ।
आदायास्त्रं सगर्वैरुपशमितवधूसम्भ्रमैर्दैत्यवीरैः
सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ २ ॥

(२) मयेन दैत्यशिल्पिना, निर्मितं पुरं मयपुरं त्रिपुरासुरपुरमित्यर्थः, मध्यपदलोपी समासः, तस्य दहने दहनसमये, नानाभावेन भयान्यादिनिर्दिष्टः शिवो युष्मान् पात्वित्यन्वयः । केन केन कथं कथं दृष्टः ? तदाह, देव्या सप्रेम "धन्याऽहं यस्या वल्लभेनेदृशं पुरं दग्धम्" इति जातानुरागमहितम्, आसुरीभिः असुरपत्नीभिः, किमिदमापतितमिति भयात् सम्भ्रमात् "आः ! कष्टमीदृशस्याप्यसुरनाथस्याय परिभवः, कदाचित् अस्मत्स्वामिनामपीदृक् स्यात्" इति उद्वेगाच्च, ऋषिभिः सकरुणं सदयं, कारुण्ये हेतुं वदन् तान् विशिनष्टि, शान्तेत्यादि—शान्तमुपशमवत्, अन्तः अन्तःकरणं येषां ते, तत्त्वमनारोपितरूपं यथार्थं, ब्रह्मेति यावत्, सारो श्रेष्ठतया प्रधानं येषां ते, पश्चात् पुनः कर्मधारयः, तथा च शान्तान्तःकरणत्वात् तत्त्वप्रधानत्वाच्च तेषां दुःखिदुःखदर्शने दया युक्तैव, मैत्रीकरुणामुदितोपेक्षाश्चित्तवृत्तीनां विषयविशेषेषु शान्तात्मनामेवोदयादिति भावः, विष्णुना सस्मितेन "इच्छामात्रेणैव निहन्तुं शक्यस्यापि तस्य दहने जगदीशेनेदृक् प्रयासोऽङ्गीकृत इतीषद्धसतेत्यर्थः । प्रबन्धप्रतिपाद्यभारतसङ्ग्रामोऽपि देव्या द्रौपद्या सप्रणयम्, आसुरीभिरसुरप्रकृतिभिः दुर्योधनादिवधूभिः भयोद्वेगाभ्याम्, ऋषिभिः नारदादिभिः सकरुणं, दैत्यैर्घटोत्कचादिभिः सगर्वैः, इन्द्रेण सानन्दं, कृष्णेन च" मयैव पूर्वं निहता धार्तराष्ट्रा इत्यभिप्रायेण हतानां हननार्थमेषां मुधा उद्योग इति हसता दृष्ट इत्यपि सूचितम् । स्रग्धरावृत्तम्, "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तिता सा" इति तल्लक्षणात् ।

पाठान्तरे नान्दी ।

पुनाति च नालिकं गता सनाभिरम्भोरुहजन्मयोगः ।
शौरेः [illegible] निजोदरगह्वरस्थितिविह्वलमदलक्षः ॥ १ ॥

(१) श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः ।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ॥

(१) "रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्त्तयेत् ॥" इत्युक्तेः प्रथमं प्रबन्धस्य भारतार्थप्रतिपादकत्वसूचनाय भारतं तत्कर्त्तारञ्च स्तौति, श्रवणेत्यादि ।—आप्यायनकरत्वेन उपदेशद्वारा मोक्षरूपामृतप्रदत्वेन वा भारतस्यामृतत्वेन प्रशंसनं, तत्कर्त्तुश्च सत्त्वप्रधानतया प्रशंसनमिति द्रष्टव्यम्; अरागम् अराजसं, "रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्" इति गीतायां रजसो रागात्मकत्वाभिधानात् रागशब्देनात्र रजोगुण एव गृह्यते, अकृष्णम् अकलुषं, तमोरहितं, तथा चोभयविशेषणाभ्यां रजस्तमोगुणाभ्यामनभिभूतसत्त्वप्रधानमिति फलितम् । अत्र अतृष्णमिति पाठस्तु प्रामादिकः, रागस्य तृष्णाहेतुताया गीतायामुक्तत्वात् रागनिषेधेनैव तन्निषेधलाभे तत्कथनस्यानवीकृतत्वदोषग्रस्तत्वात् ।

अपि च ।—

जयति स भगवान् कृष्णः शेते यः शेषभोगशय्यायाम् ।
मध्ये पयः पयोधेरपर इवाम्भोनिधिः कृष्णः ॥ २ ॥

अपि च ।—

उत्सिक्तस्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ३ ॥

नान्द्यन्ते सूत्रधारः ।

"आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्तिता ॥" इत्युक्तलक्षणा । सा चेह द्वादशपदा श्लोकत्रयात्मकत्वात् "पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत" इत्युक्तेः, पदञ्च क्वचित् सुप्तिङन्तरूपं क्वचिच्च श्लोकचरणरूपं यथासम्भवं ग्राह्यम् । एतेन श्रवणाञ्जलिपुटेत्यादिश्लोकानन्तरं नान्द्यन्ते सूत्रधार इति पाठः प्रामादिक एव, तथात्वे नान्द्याः षोडशपदत्वापत्तेः । सूत्रधारः, वदतीति शेषः, एवं सर्वत्र । "नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः ॥"

अलमतिविस्तरेण। * [ समन्तादवलोक्य ] तत्रभवतः
(१) परिषदग्रेसरान् सर्वान् विज्ञापयामि।

(२) कुसुमाञ्जलिरपर इव प्रकीर्य्यते काव्यबन्ध एषोऽत्र।
मधुलिह इव मधुबिन्दून् विरलानपि भजत गुणलेशान्॥

यदिदं कवेर्मृगराजलक्ष्मणो (३) भट्टनारायणस्य अभि-

भारतपर्य्यवसायी चास्य भारतमूलकत्वं सूचितं, तत्सूचनेन च व्यासकृततत्प्रतिपादक-त्वमप्याह वर्त्यमाननाटकस्योपवर्णितमित्याशयः। आर्य्या वृत्तं, "यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्य्या" इति तल्लक्षणात्।

(१) एवं काव्यार्थं सूचयित्वा तत्र प्रसादयिष्यन् विज्ञाप्य सामाजिकान् समन्तादवलोक्य तानभिमुखीकर्तुं विज्ञापनां प्रतिजानीते तत्रभवत इत्यादि।—तत्र-भवतो मान्यानित्यर्थः। अस्यामेव प्रतिज्ञायां सभ्यानां तच्छ्रवणे कुतूहलित्वमिति विज्ञापना प्रतिज्ञातेति भावः।

(२) प्रतिज्ञातां विज्ञापनामाह, कुसुमाञ्जलिरित्यादि।—गुणलेशानित्यनेनौद्धत्यं परिहृतम्। आर्य्या वृत्तम्।

(३) कवेराख्यामाह, मृगराजलक्ष्मण इति।—मृगराजशब्देन तत्पर्य्यायार्थवाचकः सिंहशब्दो लक्ष्यते, तच्चिह्नस्य सिंहोपाधिकस्येत्यर्थः; वस्तुतः मृगेण शशेन राजते इति मृगराजः शशधरः, तच्छब्देन च तत्पर्य्यायार्थवाचको द्विजराजशब्दः प्रागवत् लक्ष्यते, तेन द्विजराजोपाधिकस्येत्यर्थः, अनेन विप्रजातित्वकथनात् न तदंशे न्यूनता, गुणश्च एतत्, शौर्य्यादिगुणेन क्षत्रियस्यैव सिंहोपाधिसम्बन्धसम्भवात् ब्राह्मणस्य तथा-त्वानौचित्यात्। साक्षात् द्विजराजशब्दमपहाय मृगराजशब्देन व्यपदेशस्तु मृग-

* [ अत्रैव "अलमतिप्रसङ्गेन, भवन्तः परिषदग्रेसराः! विज्ञाप्यं नः किञ्चिदस्ति" इति वा पाठः ]

अयं वङ्गपुस्तकपाठस्त्वसमीचीनः, भवच्छब्दस्य सर्वनामत्वेन सम्बोधनविभक्त्यन्त-तया क्वापि प्रयोगादर्शनात्।

नवकृतिं वेणीसंहार(१)नामकं नाटकं (२) प्रयोक्तुमुद्यता वयं, तत्र च कविपरिश्रमानुरोधाद्वा उदात्तवस्तुकथागौरवाद्वा (३) नवनाटकदर्शनकुतूहलाद्वा भवद्भिरवधानं (४) दीयमानमभ्यर्थये।

---

राजस्य सिंहस्य, तस्य जटाधारित्वमिव तस्य जटाधारित्वं यस्येत्यर्थलाभद्योतनायैव कविपदे जटाधारित्व, वेदपाठभेदेषु संहितापदक्रमजटाघनेषु जटाख्यपाठविशेषस्य धारणात्, तथा च, जटान्तवेदपाठित्वेन जटाधारित्वलक्षण इत्यर्थलाभः।

(१) दृश्यकाव्यरूपकस्याख्यामाह, वेणीसंहारेति।—संहारः संहरणं, ध्वंसमर्दनमिति यावत्, वेण्याः द्रौपदीकेशरचनायाः, संहारो यस्मिन् तत् वेणीसंहारं, वेणीसंहारस्य च प्रतिपाद्यतया ग्रन्थे सम्बन्धान्न विरुध्यते। एतच्च वेणीनामकमपि, दर्पणादौ वेण्यामित्याद्यसङ्गते, तथा च "तदित्यधिकृत्य" "अधिकृत्य कृते ग्रन्थे" (४।३।१८७ पा०) विहितस्याण "लुबाख्यायिकाभ्यो बहुलम्" इति तत्सूत्रस्थवार्त्तिकेन वा लुपि तद्धितस्यापि च प्रकृतिलिङ्गभागितया शकुन्तलावासवदत्तादिवत् स्त्रीत्वात् वेणीति सिद्धं, शकुन्तलाया इव भारतोपलभ्यार्थकत्वेनास्या आख्यायिकारूपत्वम्।

(२) दृश्यकाव्यस्यानेकविधत्वेऽपि अस्य विशेषरूपत्वमाह, नाटकमिति।—तच्च "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्। प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्॥ दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः। एक एव भवेदङ्गी शृङ्गारो वीर एव वा॥" इत्युक्तलक्षणम्। एकेन प्रयोजनेनान्वितानां कथांशानाम् अवान्तरैकप्रयोजनेन सम्बन्धः सन्धिः, स च मुखप्रतिमुखादिभेदेन पञ्चविधः, तेन युक्तमित्यर्थः। अत्र च वीररस एवाङ्गी।

(३) उदात्तम् औदार्य्यादिगुणयुक्तं, यद्वस्तु नायकः, तस्य कथा तत्र गौरवं श्लाघातिशयस्तस्मादित्यर्थः।

(४) अवधानं विषयान्तरपरिहारेण चित्तस्यैकत्र समावेशनम्। कथाश्रवणावधाने हि कवेः श्रमसाफल्यप्रवणता विषयसौन्दर्य्यं नववस्तुदर्शनकुतूहलित्वं वा एकैकमपि कारणम्, इह तु तत् त्रितयमपि समुदितमस्तीत्यवश्यमवधानं देयमिति भावः।

[ नेपथ्ये ]। (१) भाव ! (२) त्वर्य्यतां त्वर्य्यताम्, एते खलु, आर्य्यविदुराज्ञया पुरुषाः सकलमेव शैलूषजनं व्याहरन्ति. * "प्रवर्त्त्यन्ताम् आतोद्यविन्यासादिका विधयः, (३) प्रवेशकालः किल तत्रभवतः पाराशर्य्यनारदतुम्बुरुजामदग्न्यप्रभृतिभिर्मुनि-वृन्दारकैरनुगम्यमानस्य भरतकुलहितकाङ्क्षया स्वयं प्रतिपन्न-दौत्यस्य देवकीसूनोर्देवस्य चक्रपाणेर्महाराजदुर्य्योधनशिविर-सन्निवेशं प्रति" (४) [ प्रस्थातुकामस्येति ]।

सूत्र। [ आकर्ण्य सानन्दम् ]। अहो ! नु खलु (५) भोः ! भगवता जगदुत्पत्तिस्थितिनिरोध(६)प्रभविष्णुना विष्णुना अद्य अनुगृहीतमिदं भरतकुलं सकलञ्च राजकम् अनयोः कुरु-पाण्डवराजपुत्रयोः आहवकल्पान्तानल(७)प्रशमनहेतुना अनेन स्वयं सन्धिकारिणा कंसारिणा दूतेन। तत् किमिति पारि-पार्श्विक ! (८) नारभ्यसे कुशीलवैः (९) सह सङ्गीतकम् ?।

(१) नेपथ्ये नाट्यशालायां, "नेपथ्यं नाट्यशालायां नेपथ्यञ्च विभूषणे" इत्युक्तः, सा च जवनिकाऽन्तर्भूमिरेव।

(२) भाव। विद्वन् ! "भावो विद्वानथावुक." इत्यमरोक्तेः।

(३) विधयः विधानानि।

(४) शिविरसन्निवेशं सैन्यनिवासस्थानं प्रति भगवतः प्रवेशकाल इति पूर्वेणान्वयः, एवमन्वयसम्भवे प्रस्थातुकामस्येत्यधिकपाठकल्पनं व्यर्थम्।

(५) अहो नु खलु भोरित्यव्ययसमुदायोऽत्यन्ताश्चर्य्यसूचकः। (६) निरोधः विनाशः।

(७) आहवं युद्ध,कल्पान्तानल इवेत्युपमितसमासः, तेन तस्य पूर्वपदार्थप्राधान्येन राजपुत्रयोः कल्पान्तानलसदृशाहवप्रशमनस्य सम्भवः, रूपके तु तदन्वयो न सम्भवतीति बोध्यम्।

(८) "सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह। काव्यार्थसूचनालापं स भवेत पारिपार्श्विकः॥" इति भरतोक्तलक्षणो नटविशेषः।

(९) कुशीलवैर्नटैः, "भरतास्तु कुशीलवाः" इति भरतोक्तेः।

* [ परिवृत्तुखि इति क्वचिदधिकः पाठः ]

[ प्रविश्य (१) पारिपार्श्विकः ]। भवतु, आरभयामि। कतमं समयमाश्रित्य गीयताम् ?।

सूत्र। ननु अमुमेव चन्द्रातपनचक्रक्रौञ्चहंसकुलसप्तच्छद-कुमुदपुण्डरीककाशकुसुमपरागधवलितगगनदिङ्मण्डलं स्वादु-जलजलाशयं शरत्समयमाश्रित्य प्रवर्त्त्यतां सङ्गीतकम्। तथा हि अस्यां शरदि—

(२) सत्पक्षाः मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।
निपतन्ति धार्त्तराष्ट्राः कालवशात् मेदिनीपृष्ठे ॥

पारिपार्श्विकः। [ ससम्भ्रमम् ]। भाव! शान्तं पापं, प्रतिहतम् अमङ्गलम्। (३)

सूत्र। [ सवैलक्ष्यस्मितम् ]। मारिष! शरत्समयवर्णना-शंसया [ हंसा धार्त्तराष्ट्रा इति व्यपदिश्यन्ते ] * तत् किं शान्तं पापं प्रतिहतममङ्गलम् ?।

(१) अपटीक्षेपेण स्वयं प्रवेशे नाट्ये प्रविश्येत्युक्तिः, एवं सर्वत्र द्रष्टव्यम्।

(२) "श्लेषच्छायोपदेशेन समुद्दिष्टं विसर्पति। यत् फलोदयपर्य्यन्तं तद्वीजमिह कीर्त्तितम्॥" इति भरतोक्तफलोदयपर्य्यन्तं प्रबन्धप्रतिपाद्यमर्थं बीजरूप श्लेषेण दर्शयति, सत्पक्षा इत्यादि।—धार्त्तराष्ट्रा हंसविशेषा धृतराष्ट्रसुताश्च, कालवशात् शरन्माहात्म्यात् समयनियोगाच्च, मेदिनीपृष्ठे भूमितले, निपतन्ति मानससरस आगच्छन्ति, निःशेषेण पतन्ति, समूलमुच्छिद्यन्ते चेत्यर्थः; विशेषणसाम्येनोभयं दर्शयति, सत्पक्षाः शोभनपक्षाः विद्यमानसैन्यादिसहायाश्च, मधुरगिरः मधुरशब्दाः मधुरवाचोकाश्च, प्रसाधिताशाः भूषिताशेषदिग्विभागाः वशीकृताशेषदिग्-जनाश्च, मदेन हर्षेण गर्वेण च, उद्धतारम्भाः उत्कटव्यापारा उच्छृङ्खलचरिताश्च। आर्य्या वृत्तम्।

(३) "शान्तं पापमनिर्देश्ये" इत्युक्तेः न वक्तव्यमित्यर्थः। अवक्तव्यत्वे हेतुमाह, प्रतिहतमित्यादि।—अमङ्गलमशिवं, तद्धेतुभूतं वाक्यं, प्रतिहतं प्रतिघातेनोच्चारितम्।

* [ हंसान् धार्त्तराष्ट्रानिति व्यपदिशामि न धृतराष्ट्रसुतान् ]।

पारि। न खलु जाने,(१) अमङ्गलाशंसया अस्य वो वचनस्य यत् सत्यं (२) कम्पितमिव मे हृदयम्।

सूत्र। मारिष! (३) ननु सर्वमेवेदानीं प्रतिहतममङ्गलं स्वयं प्रतिपन्नदौत्येन सन्धिकारिणा कंसारिणा। तथा हि—

(४) निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥

---

(१) न खलु जाने किन्तु जानाम्येव यत् शरद्वर्णनप्रकरणीयतया वचनस्य हंसपरत्वं, न त्वन्यपरत्वम्।

(२) यत् सत्यमिति अव्ययमुद्रायोऽसम्भावनीयार्थसूचकः, "सत्याव्ये तु यत्सत्यम्" इति भरतोक्तेः, तच्च कम्पनक्रियान्वयि, असम्भावितमपि हृदयकम्पनं वो वचनस्यामङ्गलार्थस्यापि प्रतिपादनसामर्थ्यात् कम्पितमिवेत्यर्थः।

(३) मारिष। आर्य। "आर्यस्तु मारिषः" इत्यमरोक्तेः।

(४) अरीणां शत्रूणां, "ध्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखम्?" इत्युक्तेरेकस्यापि सत्त्वे न सुखमित्यतो बहुवचनम्, प्रशमात् माधवेनेत्यर्थात् सन्धिकरणद्वारा शान्तेः प्रापणात्, निर्वाणो दाहनिवृत्तौ दाहकनिर्वाणवत् शान्तिप्रापणेन अरिभावापगमेन निःशेषेण निवृत्तः, वैरदहनो विद्वेषानलो येषां तथाभूताः सन्तः माधवेन सह पाण्डुतनयाः नन्दन्त्वित्यन्वयः। अत्र अरिप्रशमनरूपहेतोरन्वयोपपत्तये पूर्वपदार्थप्रधानः वैरं दहन इवेति उपमितसमासो ग्राह्यः, न तु वैरमेव दहन इति रूपकसमासः, तस्य उत्तरपदार्थप्रधानतया उक्तहेतोरन्वयानुपपत्तेः; वस्तुतः दुःखाभावे सत्येव आनन्दोदयात् तत्पदस्य दुःखाभावपरत्वं कल्पनीयं, तथा च, निर्वाणं निवृत्तं, वैरस्य विद्वेषस्य, दहनं तापो येषामित्येव विग्रहः साधीयान्, अरिभावप्रशमनेन च तद्विषयकविद्वेषाभावात् तत्कृततापरहिता इत्यर्थः, रक्तेन अनुरागेण, प्रणयेनेत्यर्थः, प्रसाधिता आयत्तीकृता, भूर्भूलोको यैस्तथाभूताः, क्षतो विनष्टः, विग्रहो युद्धं येषां ते तथाभूताः, सभृत्याः कुरुराजसुताः स्वस्थाः सुखिनः, भवन्तु। पक्षे— अरीणां शत्रूणां, माधवेन सह वैरिपक्षात् प्रशमात् निवारणात्, समूलमुच्छेदात्

[नेपथ्ये साधिक्षेपम्]। आः! पाप! दुरात्मन्! वृथामङ्गलपाठक! शैलूषापसद! (१)

(२) लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः!! ॥

सूत्र। [आकर्ण्य सभयं नेपथ्याभिमुखमवलोक्य च]। (३)। *

---

निर्वाणवैरदहनाः निवृत्तविद्वेषकृततापाः, रक्तेन रुधिरेण, प्रसाधिता अलङ्कृता, भूर्यैस्ते, तत्र हेतुः क्षतविग्रहाः विक्षतशरीराः, स्वस्थाः स्वर्गस्थाः, भवन्त्वित्यर्थः, "सुस्थिते च मृते स्वस्थः" इति कोषः। अत्र श्लिष्टेन वाक्येन प्रकरणप्रतिपाद्यस्यार्थस्याभिधानात् श्लेषगण्डाख्यं नाटकाङ्गं, यथोक्तं भरतेन "द्व्यर्थता यत्र वाक्यानां श्लेषेणार्थः प्रतीयते। शब्दभङ्ग्याऽनुपात्तोऽपि श्लेषगण्डः स उच्यते॥" इति। शब्दभङ्ग्या विलक्षणशब्दसन्निवेशनेन, अनुपात्तः अप्राकृतः, अविकारात् प्राकृतः अर्थः। दर्पणकृता त्विदं पताकास्थानत्वेनोक्तं, "वचः सातिशयश्लिष्टं नानाबन्धसमन्वितम्। पताकास्थानमुद्दिष्टम्" इति लक्षयित्वेदमुदाहृतम्। वसन्ततिलकं वृत्तं, "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति तल्लक्षणात्।

(१) शैलूषेषु नटेषु अपसदः अधमः, तत्सम्बुद्धौ।

(२) लाक्षाप्रधानं गृहं लाक्षागृहं, विषमिश्रमन्नं विषान्नं, मध्यपदलोपी समासः, सभाप्रवेशः द्यूतार्थं सभायां प्रवेशनं, परिधीयते इति परिधानं वसनं, कर्मणि ल्युट्। इह नाटकीयस्य फलहेतुभूतस्य विषानलादेः सर्वस्य कीर्त्तनात्, मयि जीवतीत्यनेन च उत्साहस्य कथनात्, स्वस्था भवन्त्वित्यनेन च अवसानस्य कीर्त्तनात् विन्दुकं नाम नाटकाङ्गं. तदुक्तं भरतेन, "नाटकीयफले हेतुभूतस्याख्यानकीर्त्तनात्। आ-फलोदयमुत्साहावसानाभ्यां तु विन्दुकम्॥" इति। दर्पणकृता तु "काव्यार्थस्य समुत्पत्तिरुपक्षेप इतीष्यते" इति मुखाङ्गविशेषमुपक्षेपकं लक्षयित्वा एतत् पद्यमुदाहृतम्। वसन्ततिलकं वृत्तम्।

(३) नेपथ्यस्य अभिनेयरूपधारणस्थानस्य, अभिमुखं द्वारम्, अवलोक्य, वदतीति शेषः।

---

* [सूत्रधारपारिपार्श्विकौ] क्वचिदित्येव पाठः।

आः !! कुत एतत् ? । [पृष्ठतो विलोक्य] । अये ! (१) कथमयं वासुदेवगमनात् कुरुसन्धानममृष्यमाणः पृथुललाटतटघटितविकट*भ्रुकुटिना दृष्टिपातेन पापिबन्निव नः सर्वान् सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभिवर्त्तते, (२) तन्न युक्तमस्य पुरतः स्थातुम † [ निष्क्रान्तौ । (३)प्रस्तावना ] (४)।

[ ततः (५)प्रविशति सहदेवेनानुगम्यमानः क्रुद्धो भीमसेनः ] ।

भीम । आः ! पाप ! दुरात्मन् ! वृथामङ्गलपाठक ! शैलूषापसद ! [ लाक्षागृहेत्यादि पुनः पठति ] ।

सह । [ सानुनयम् ] । आर्य्य ! मर्षय मर्षय, अनुमतमेव

(१) अये इति निपातः व्यासङ्गादिनाऽवधारितार्थस्य हठादावर्जने सम्भ्रमातिशयमभिधत्ते ।

(२) इत एव इहैव, अभिवर्त्तते आभिमुख्येन वर्त्तते, आगन्तुमारभते इत्यर्थः ।

(३) निष्क्रान्तौ सूत्रधारपारिपार्श्विकौ, तयोरेव पूर्वं रङ्गे प्रविष्टत्वात् ।

(४) प्रस्तावना आमुखं, पूर्वरङ्ग इति यावत, "नटी विदूषको वाऽपि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ आमुखं तद्विज्ञानीयात् बुधैः प्रस्तावनोच्यते ॥" इयञ्च प्रस्तावना कथोद्घातरूपा, सूत्रधारवाक्यार्थमादाय भीमसेनपात्रस्य प्रवेशात्, यथोक्तं दर्पणे "सूत्रधारस्य वाक्यं वा समादायार्थमेव वा । भवेत् पात्रप्रवेशश्चेत् कथोद्घातस्तदोच्यते" ॥ इति । अत्र सूत्रधारेण प्रबन्धप्रतिपाद्यार्थस्य श्लेषेण सूचनेऽपि तद्वाक्यमन्यार्थपरतया सम्भाव्य भीमरूपपात्रस्य प्रवेश इति बोध्यम् ।

(५) ततः प्रवेशसूचनानन्तरम्, "असूचितस्य पात्रस्य न च नाट्ये प्रवेशनम्" इत्युक्तेः । अत्र प्रवेशननिरुक्तिः पटीक्षेपेण स्वयं प्रवेशे तु न सूचनापेक्षेति सूचितम् ।

* [ कीनाशनगरीरथ्यचिकुरायमानभीषण ] क्वचिदधिकपाठः ।

† [ [illegible] ] क्वचिदधिकपाठः ।

नो भरतपुत्रस्यास्य वचनम्। पश्य [ निर्वाणवैरदहना इति पठित्वा अन्यथाऽभिनयति (१) ]*

भीम। [ सोपालम्भम् ]। न खलु (२) न खलु अमङ्गलानि चिन्तयितुमर्हन्ति भवन्तः कौरवाणां, सम्बेयास्ते भ्रातरो युष्माकम्।

सह। [ सरोषम् ]। आर्य !

धृतराष्ट्रस्य तनयान् कृतवैरान् पदे पदे (३)।
राजा न चेन्निषेद्धा स्यात् कः क्षमेत तवानुजः ? ॥

भीम। [ सरोषम् ]। एवमिदम्, अत एव अद्य प्रभृति भिन्नोऽहं भवद्भ्यः (४)। पश्य—

(५) प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभिः
न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम्।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा सन्धिं भीमो विघटयति यूयं घटयत ॥

---

(१) अन्यथा मरणार्थपरतया, सभृत्याः कुरुराजसुताः क्षतजालङ्कृतभूमयः स्व-र्गस्था मृताः, भवन्तु एतत्परतयेत्यर्थः। अभिनयति तथाऽर्थबोधकशरीरचेष्टादिना व्यञ्जयति।

(२) न खलुशब्दोऽत्यन्तनिषेधवाची समुदितो निपातः।

(३) पदे पदे प्रतिस्थानं, प्रतिविषयमिति यावत्। पथ्यावक्त्रं वृत्तं, "युजोश्चतु-र्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति तल्लक्षणात्।

(४) अत्र "भेदः संहतिभेदनम्" इति दर्पणोक्तभेदाख्यं नाटकाङ्गम्।

(५) शिशोरेव शिशुकालमारभ्य, सहजमिति यावत्, कुरुभिः सह मम यद्वैरं प्रवृद्धमुपचितं, तत्र तस्य, हेतुर्निमित्तम्, आर्यो न, युवां नकुलसहदेवौ, तस्य हेतू न भवथ इति विपरिणामः। उर एव स्थलमाधारो यस्य तमुरःस्थलमित्यर्थः,

---

* [ यथाऽथमेव क्षतजालङ्कृतवसुन्धराः क्षतशरीराश्च सभृत्याः कुरवः स्वर्गस्थाः भवन्त्विति ब्रवीति ]।

क्षतजालङ्कृता इत्यादिग्रन्थपाठस्तु स्फुटत्वाद्दोषदूषितत्वाद्वा नादृतः।

सह। [ सानुनयम् ]। आर्य्य! एवमतिसम्भृतक्रोधेषु युष्मासु कदाचित् खिद्यते गुरुः।

भीम। [ सहासम् ]। किं नाम !! मयि खिद्यते गुरुः ? [ सामर्षम् ]। गुरुः खेदमपि जानाति ? पश्य,

(१) तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।

---

विकट प्रसवकालेऽजातं मातृभ्यां प्रसूतदेहार्द्धखण्डद्वयं प्रथमं वियुक्तमासीत् ततो जरया राक्षस्या संश्लेषणेन पुनः संयोजितमित्यर्थः, सन्धिं सन्धिस्थानमिव, युष्माभिः क्रियमाणं सन्धिं पणविशेषं साकूत्य च, विघटयति वियोजयति, अपाकरोतीति यावत्, भ्रातृसाहाय्यभङ्गमाशङ्क्याह, क्रुधेति वैरजातक्रोधेन, प्रागुक्तेन संहतिभेदेन च तव दोषं न गणये इति भावः, यूयम् आर्य्यादयः त्वदादिशेष, पुनर्घट-यत, असम्भावितोत्पादनाय यत्नो हि घटना, असम्भावितमपि तेषां सन्धिमुत्पाद-यितुं यतध्व, न तु सेत्स्यतीति भावः। अत्र यूयञ्च कुरुतेति पाठस्तु भग्नप्रक्रम-दोषाघ्राततया दर्पाद्यसम्पाततया विवक्षितार्थाप्रतिपादकतया चोपेक्षितः। अत्र च महाभारतीया कथाऽनुसन्धेया, सा च सभापर्व्वणि १६ अध्याये "अथ काले महाप्राज्ञ। यथासमयमागते। प्रजायेतामुभे राजन्। शरीरशकले तदा॥ एकाक्षि-बाहुचरणे अर्द्धोदरमुखस्फिचे॥" इति।…"ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी। जगृहे मनुजव्याघ्र मांसशोणितभोजना॥ कर्त्तुकामा सुखवहे शकले सा तु राक्षसी॥ संयोजयामास तदा विधानबलचोदिता। ते समानीतमात्रे तु शकले पुरुषर्षभ।॥ एकमूर्त्तिधरो वीरः कुमारः समपद्यत॥" इत्युपक्रम्य राज्ञे तया ते दत्ते इत्यभिधाय "जरया सन्धितो यस्मात् जरासन्धो भवत्वयम॥" इत्युक्तम। तत्रैव २३ अध्याये 'अभज्य पृष्ठ माक्षिप्य निष्पिष्य च ननाद च। करे गृहीत्वा चरणं द्वेधा चक्रे महाबलः॥" इति द्वैधीकरणेन भीमेन हत इत्युक्तम। निष्कर्षितोऽर्थः।

(१) तथाभूतामनुभूतप्रकारां, कृतकेशाम्बराकर्षणाम् ऋतुमतीमेकवस्त्रां धर्षिता-मित्यर्थः, अतिदुःखाकरस्य कथनेऽपि क्लेशप्रदायित्वात्तथेत्यनेन कारितमिति भावः, दृष्ट्वा प्रत्यक्षमुपलभ्य, न तु श्रुत्वा, नृपसदसि नृपाणां सदसि, न तु एकान्ते नाप्य-श्रिया क्षुद्राणां समीपे, सजातीयानां विशेषतः प्रधानानां समक्षे अपमानमसहि-

विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥

तत् सहदेव! निवर्त्तस्व, एवञ्च अतिचिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनात् विज्ञापय राजानम्।

सह। आर्य्य! किमिति?।

भीम। एवं विज्ञापय।

(१) युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि।
क्रोधोल्लासितशोणिताक्तगदस्योच्छिन्दतः कौरवान्
अद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥

---

दुःखकरमिति भावः, पञ्चालानां जनपदानां राजा तस्य तनयामित्यनेनाभिजात्यसूचनेनापि दुःखकरत्वं द्योतितम्; एवं कलत्रगतं दुःखं दर्शयित्वा आत्मनि भ्रातृषु च तदाह, वने इत्यादि—वने न तु ग्रामे, व्याधैः सार्द्धं सह, अथवा व्याधोपजीविकाधारिभिरस्माभिः सार्द्धम् एकवस्त्रतया वाहितैः, उषितम्, तत्रापि सुचिरं न त्वल्पकालम्; व्याधैरित्यनेनाजीविकाया दुःखमभिधाय परिधाने तदाह, वल्कलधरैरिति। अनुचितानां द्यूतसहायता-पाचकता स्त्रीनर्तन-गवाश्वपालनादीनाम्, आरम्भेण अनुष्ठानेन, निभृतं गुप्तं यथा स्यादेवं, स्थितं, खिन्ने कलत्रभ्रातृक्लेशं दृष्ट्वा स्वयञ्चानुभूय खेदं प्राप्ते, मयीत्यनेन एवं क्लेशे युष्माकं खेदाभावेऽपि आत्मनोऽसहिष्णुत्वं द्योतितं, गुरुः खेदं मनस्तापं, भजति, अद्यापि इदानीमपि, कुरुषु एवं क्लेशदायिष्वपि, शेषार्थः, तस्य च खेदाभिज्ञत्वे तेषु विषयेषु अवश्यमेव खेदः स्यात्, अतः पूर्वं यदुक्तं गुरुः खेदमपि जानातीति तत् समर्थितमित्याशयः। शिखरिणीवृत्तम्।

(१) नाम प्राकाश्ये, प्रकाशयामि यत् युष्माकमाज्ञाऽतिक्रमजले अन्तःप्रविष्टेन मया स्थितमिति, स्थितिमतां ज्येष्ठानुसरणरूपमर्यादावतां, द्वितीयं नाम सम्भावनायां, सम्भावयामि आत्मनो विगर्हणा अपीत्यत्रैवान्वयितव्यः, निन्दाऽपि, प्राप्ता उपलब्धेति, कनिष्ठानां भ्रातृणामाज्ञानुवर्त्तित्वात् आत्मनस्तदतिक्रमात्तन्निन्दा युक्तैवेति

[ इति साटोपं (१) परिक्रामति ]।

सह। [ तमेव अनुगच्छन् आत्मगतम् (२) ]। अये! कथमार्य्यः पाञ्चाल्याश्चतुःशालं प्रविष्टः!!। भवतु तावत्, अहम् अत्रैव तिष्ठामि। [ इति स्थितः ]।

भीम। [ परानिवृत्य अवलोक्य च ]। सहदेव! गच्छ त्वं गुरुमनुवर्त्तस्व, अहमप्यायुधागारं प्रविश्य आयुधसहायो भवामि।

सह। आर्य्य! नेदमायुधागारं, पाञ्चाल्याश्चतुःशालमिदम्।

भीम। [ सवितर्कम् ]। किं नाम !! नेदमायुधागारं, पाञ्चाल्याश्चतुःशालमिदम्? [ विचिन्त्य सहर्षम् ]। आमन्त्रयितव्या मया पाञ्चाली। [ सप्रणयं सहदेवं हस्ते गृहीत्वा ]। वत्स! आगम्यताम्।

सह। यदादिशत्यार्य्यः।

---

भावः, उच्छिन्दतः समूलं नाशयतः, मम सम्प्रतिकाले, न त्वस्मिन्नहनि, एकं दिवसं व्याप्य गुरुर्नियन्ता, उच्छेदनविषये इत्यर्थात, न विधेयः नियम्य। अत्र क्रोधोज्ज्वलितेत्यनेनायुधान्तरापेक्षा नास्तीत्यस्य, उच्छिन्दत इत्यनेन समूलनाशनस्य, कौरवानित्यनेन सर्वेषाम्, अद्येत्यनेन एतावत्काल प्रतिज्ञानुरोधेन सोढं नातःपर सोढव्यमित्यस्य, एकं दिवसमित्यनेन एकाह्नैव कृतकृत्यतायाः, ममेत्यनेन सहायान्तरापेक्षा नास्तीत्यस्य च सूचनादुत्साहातिशयो दर्शितः। अत्र कार्य्यस्य कौरवोच्छेदस्य हेतोर्गदासमुल्लासनस्य, अकार्य्यस्य च निन्दालाभहेतोर्गुरुशासनलङ्घनस्योक्तेः परिकरनामकसन्ध्यङ्गं "कार्य्याकार्य्यस्य हेतूनामुक्तिः परिकरो मतः" इति भरतभाष्यात्। शार्दूलविक्रीडितं वृत्तम्।

(१) साटोपं साहङ्कारम्।

(२) आत्मगतं स्वगतं, "यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते" इति भरतवाक्यात्।

भीम। वत्स! यदार्य्यः कुरुभिः सन्धानमिच्छन्नस्मान् (१) पीडयति तद्भवानपि पश्यतु। [परिक्रम्य उभौ गृहप्रवेशं नाटयतः]।

भीम। [सक्रोधं भूमौ उपविशति]।

सह। [ससम्भ्रमम्]। आर्य्य! इदमासनमास्तीर्णम्, अत्र उपविश्य मुहूर्त्तम् आर्य्यः पालयतु कृष्णाऽऽगमनम्।

भीम। वत्स! कृष्णाऽऽगमनमित्यनेनोपोद्घातेन (२) तत् स्मृतम्, अथ भगवान् कृष्णः केन प्रकारेण सन्धिं कर्त्तुं सुयोधनं प्रति प्रस्थितः?।

सह। आर्य्य! पञ्चभिर्ग्रामैः।

भीम। [कर्णौ पिधाय]। अहह!! कथं तस्य देवस्य अजातशत्रोरप्ययमीदृशस्तेजोऽपकर्षः!! इति यत् सत्यं कम्पितमिव मे हृदयम्। तद्वत्स! न त्वया कथितं, न च मया भीमेन श्रुतम्। [परिवृत्य स्थित्वा]।

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम्॥

---

(१) सन्धिकरणेनेत्यादि। तत्करणे तु द्रौपदीकेशसंयमनं न स्यादिति च नः पीडा।

(२) कृष्णाया द्रौपद्याः, आगमनमित्युक्तौ कृष्णस्यागमनमपि तुल्यानुपूर्वीकपद-प्रतिपाद्यतया स्मृतं, तत्स्मृत्या च सन्धिप्रस्तावस्य तदीयकार्य्यकरणहेतुतया तदीय-कर्त्तव्यसन्धिविषयकस्मरणमिति द्योतयन्नाह, उपोद्घातेनेति—"चिन्ता प्रकृतसिद्ध्यर्था-मुपोद्घातं विदुर्बुधाः" इत्युक्तया प्रकृतसिद्ध्यनुकूलचिन्तयेत्यर्थः। कथोद्घातेने'ति पाठे तु—कथायाः कथाऽन्तरस्य, उद्घात उद्भेदो यस्मात् कथाऽन्तरप्रसरणहेतुनाऽनेनेत्यर्थः; तत्र हेतुस्तु तत्स्मरणमित्याशयः।

[ नेपथ्ये ]। समस्ससदु समस्ससदु भट्टिणी, अवणइस्सदि दे मण्णुं णिच्चाणुबद्धकुरुवेरो कुमारो भीमसेणो। (क)

सह। [ कर्णं दत्त्वा नेपथ्याभिमुखमवलोक्य आत्मगतम् ]।

अये! कथं याज्ञसेनी मुहुरुपचीयमानबाष्पपटलावृतनयना आर्य्यममीपमुपसर्पति!! तत् कष्टतरमापतितम्।

(१) यद्वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतम्।
तत् प्रावृडिव कृष्णेयं नूनं संवर्द्धयिष्यति॥

[ ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च ]।

द्रौप। [ सवाष्पं निश्वसिति ]।

चेटी। समस्ससदु समस्ससदु भट्टिणी, अवणइस्सदि दे मण्णुं णिच्चाणुबद्धकुरुवेरो कुमारो भीमसेणो। (ख)

द्रौप। हञ्जे बुद्धिमदिए! होदि एदं, जइ महाराओ पडिउलो ण भवे। (ग)

चेटी। [ विलोक्य ]। एसो कुमारो चिट्ठदि, ता णं उवसप्पदु भट्टिणी। (घ)

---

(१) वैद्युतं विद्युत्प्रभवम्। आर्य्ये भीमे। सम्भृतं जातम्। आर्य्यक्रोधेन सम्भृतमिति पाठस्तु दर्पणकर्त्ताऽसम्मतत्वेनानादेयः। इह दिष्टनामकं लक्षणं, "देशकालस्वरूपेण वर्णना दिष्टमुच्यते" इति दर्पणोक्तेः। पथ्यावक्त्रं वृत्तम्।

---

(क) समाश्वसितु समाश्वसितु भट्टिनी, अपनेष्यति ते मन्युं नित्यानुबद्धकुरुवैरः कुमारो भीमसेनः। "इतरासु च भट्टिनी" इति अमरात् महिष्यामपि।

(ख) समाश्वसित्वित्यादि प्राग्वत्।

(ग) हञ्जे बुद्धिमतिके! भवेत् एतत्, यदि महाराजः प्रतिकूलो न भवेत्। "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरोक्तेः हञ्जे इति चेटीसम्बोधनसूचको निपातः।

(घ) एष कुमारस्तिष्ठति, तदेनम् उपसर्पतु भट्टिनी।

द्रौप। हञ्जे! एव्वं करेह्म (क)।

[ उभे प्रविशतः ]।

चेटी। जअदु जअदु कुमालो। (ख)

भीम। [ अशृण्वन् सक्रोधं यत्तदूर्जितमिति पुनः पठति ]।

चेटी। [ द्रौपदीमुपसृत्य ]। भट्टिणि! प्पिअं दे णिवेदेमि, परिकुविदो विअ कुमालो लक्खीअदि। (ग)

द्रौप। हञ्जे! जइ एव्वं, ता अवहीरणा वि एसा मं आस्सासअदि ज्जेव, ता एत्थ उवविट्टा भविअ सुणोमि दाव णाहस्स व्ववसिदं। (घ)

[ इति तथा कुरुतः ]।

---

[ ता णाधं पेक्खिदुं तुवरदि मे हिअअं, ता आदेसेहि मे णाधस्स वासभवणम्। (क)

चेटी। एदु एदु भट्टिणी। (ख) [ इति परिक्रामतः ]।

चेटी। एदं वासभवणं, ता प्पविसदु भट्टिणी। (ग)

द्रौप। हञ्जे! कधेहि णाधस्स मह आगमणं। (घ)

चेटी। जं भट्टिणी आणवेदि। (ङ)

[इति परिक्रम्योपसृत्य च]। [इत्येव दाक्षिणात्यपुस्तके पाठः]।

---

(क) हञ्जे! एवं कुर्वः।

(ख) जयतु जयतु कुमारः। कुमारो युवराजः।

(ग) भट्टिनि। प्रियं ते निवेदयामि, परिकुपित इव कुमारो लक्ष्यते।

(घ) हञ्जे। यद्येवं, तदवधीरणाऽपि एषा मां समाश्वासयत्येव, तदत्रोपविष्टा भूत्वा शृणोमि तावन्नाथस्य व्यवसितम्। व्यवसितमध्यवसायम्, उद्यममिति यावत्।

---

(क) तत् नाथं प्रेक्षितुं त्वरते मे हृदय, तदादेशय मे नाथस्य वासभवनम्।

(ख) एतु एतु भट्टिनी।

(ग) एतत् वासभवनं, तत् प्रविशतु भट्टिनी।

(घ) कथय नाथस्य ममागमनम्।

(ङ) यत् भट्टिनी आज्ञापयति।

भीम। [सक्रोधम्। सहदेवमधिकृत्य]। किं नाम!! पञ्चभिर्ग्रामैः सन्धिः?।

(१) मथ्नामि कौरवशतं समरे न कोपात्?
दुःशासनस्य रुधिरं न पिबाम्युरस्तः?।
सञ्चूर्णयामि गदया न सुयोधनोरू?
सन्धिं करोतु भवतां नृपतिः पणेन!!॥

द्रौप। [सहर्षम्। जनान्तिकम् (२)]। णाह! अस्सुदपुव्वं ईदिसं वअणं, ता पुणोवि भणाहि (३)। (क)

भीम। सहदेव! पश्य [मथ्नामि कौरवशतमित्यादि पुनः पठति]।

(१) मथ्नामीत्यादौ सर्व्वत्र भविष्यत्सामीप्ये लट्, मथिष्यामीत्याद्यर्थः, गुरुशासनानुरोधेन कौरवशतमथनम् असम्भावितं, तच्च काक्वर्थकनञर्थेण व्युदस्यते, गुरुशासनानुरोधेन हेतुः, कोपादिति क्रुद्धस्य कार्य्याकार्य्यविवेकराहित्यं प्रसिद्धमिति भावः। आत्मनोऽधुना विधेयत्वाभावद्योतनतया भवता नृपतिरित्युक्तम्। अत्र च आनुषङ्गिकनृपकर्त्तृकपणश्रवणात् नष्टस्येव स्वप्रतिज्ञातस्य वैरनिर्य्यातनबीजस्य कुरुमथनादेः प्रकाशनात् प्रतिमुखनामकसन्धिः, यथोक्तं भरतेन "आनुषङ्गिककार्य्येण क्रियते यत्प्रकाशनम्। नष्टस्येवेह बीजस्य सन्धिः प्रतिमुखं भवेत्॥" इति। वसन्ततिलकं वृत्तम्।

(२) जनान्तिकं रङ्गजनसमीपेऽन्योऽन्यमन्त्रणम्, "अन्योऽन्यमन्त्रणं यत् स्यात् जनान्ते तत् जनान्तिकम्" इति भरतोक्तेः। जनान्ते रङ्गदर्शकजनसमीपे, न तु अभिनेयसमीपे इत्यर्थः। दर्पणे तु "त्रिपताककरेणान्यानपवार्य्यान्तरा कथा" इति अधिकं पठित्वा यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरा ऊर्द्ध्वसर्व्वाङ्गुलि-नामितानामिकं त्रिपताकालक्षणं करं कृत्वाऽन्येन सह यन्मन्त्र्यते तज्जनान्तिकमिति व्याख्यातम्।

(३) इह प्राप्तिनामकं मुखाङ्ग, "प्राप्तिः सुखागमः" इति दर्पणोक्तेः।

(क) नाथ! अश्रुतपूर्व्वमीदृशं वचनं, तत् पुनरपि भण।

सह। आर्य्य ! किं महाराजस्य सन्देशोऽयमव्युत्पन्न इव गृहीतः ? (१)।

भीम। का पुनस्तत्र व्युत्पत्तिः ?। (२)

सह। एवं गुरुणा सन्दिष्टम्।

भीम। कस्य ?।

सह। सुयोधनस्य।

(३) इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम्।
देहि मे चतुरो ग्रामान् पञ्चमं किञ्चिदेव तु ॥

---

(१) अव्युत्पन्नः तात्पर्य्याविषयीभूतोऽर्थः, पञ्चग्राममात्रविषय इत्यर्थः, गृहीतः आपाततो ज्ञातः, न तु तस्य पञ्चग्राममात्रपरता, किन्तु अन्यार्थता, स्फुटीभविष्यति चैतदुपरिष्टात्।

(२) का व्युत्पत्तिः ? तात्पर्य्यञ्च कीदृशार्थपरता ?।

(३) इन्द्रप्रस्थं खाण्डवप्रस्थस्यैव संज्ञान्तरम्। आदिपर्व्वणि २०७ अध्याये "भ्रातृभिः सह कौन्तेय ! निबोध गदतो मम। पुनर्वो विग्रहो मा भूत् खाण्डवप्रस्थमाविश ॥" इत्युपदिष्टैः हास्तिनपुरात् विवासितैस्तैरभिनवपुरमिन्द्रप्रस्थनामकं तथा निर्मितम्; यथोक्तं तत्रैवाध्यायशेषे "एवं सम्प्राप्य राज्यं तदिन्द्रप्रस्थं तपोधन !" इति जनमेजयप्रश्नवाक्यम्; तथा चानेन हास्तिनपुरान्निर्वासनरूपापकारस्थानं ज्ञापितम्। वृको वृकोदरः, उत्तरपदलोपः; वृको भक्ष्यकीटः, उदरे यस्य स वृकोदरः, तत्संज्ञाप्राप्तिस्थानं वृकप्रस्थं, तच्च प्रमाणकोटीस्थानमेव, तत्रैव विषदानेन उन्मत्तीकृत्य स्थापिते भीमे दुर्य्योधनादिभिर्गङ्गाम्भसि निक्षिप्ते सति पातालगमनेन तत्र दश रसकुम्भान् पीतवति सति तेषामपि जारणात् वृकोदर इति संज्ञा विख्याता। आदिपर्व्वणि १२८ अध्याये एषा कथाऽनुसन्धेया; तत्स्थाननाम्ना च विषदानापकारस्मारणम्। जयन्तं द्यूतेन जयस्थानं, तेन राज्यापहरणकलत्रधर्षणवनवासनाद्यपकारस्मारणम्। वारणावतं जतुगृहदाहनस्थानम्; "पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम्" इत्युपक्रम्य "स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना। वारणावतमद्यैव यथा यासि तथा कुरु ॥—शणसर्ज्जरसादीनि यानि द्रव्याणि कानिचित्। आग्नेयान्युत वा सन्ति तानि तत्र प्रदापय ॥" इति आदिपर्व्वणि १४४ अध्याये पुरोचनं प्रति दुर्य्योधनवाक्यं, तेन जतुदाहस्मारणम्।

भीम। ततः किम्?।

सह। तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्त्तनात् विषभोजन-जतुगृह-द्यूतसभाद्यपकारस्यानोद्घाटन-मेवेदं मन्यामहे।

भीम। [साटोपम्]। वत्स! एवं कृते किं कृतं भवति?।

सह। आर्य्य! एवं कृते लोके तावत् स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं, कुरुराजस्य असन्धेयता च दर्शिता भवति।

भीम। सर्वमप्येतदनर्थकं, कुरुषु तावदसन्धेयता तदैव निवेदिता यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञातं, प्रसिद्धश्च लोकेऽपि धार्त्तराष्ट्रकुलक्षयः।

सह। [लज्जां नाटयति]।

भीम। किम्!! लज्जाकरो भवताम्!! अपि च रे मूर्ख!

युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणम्?॥

द्रौप। [जनान्तिकम्]। णाह! ण लज्जंति एदे, तुमं वि दाव मा विसुमरेहि। (क)

भीम। वत्स! कथं चिरयति पाञ्चाली? त्वरते मे मनः सङ्ग्रामावतरणाय।

---

एवं प्रतिग्रामनाम्ना तत्तदुपचारं कारयित्वा पञ्चमं कश्चिदेव त्वित्यनेन प्रार्थितं, तस्यायमाशयः, कश्चिदेव ग्रामं यस्यैकदेशः ग्रामः सोऽपि ग्रामान्ततया ग्राम एव, स च सङ्ग्राम एव, तस्य ग्रामान्तत्वात्; अन्यस्य ग्रामान्तस्य निवारणाय पञ्चममिति विशेषणम्; पञ्च पञ्चत्वं, भावप्रधाननिर्देशः, पञ्चानां भूतानां स्वस्वरूपापादकतया मरणमेव पञ्चत्वं, तत् माति ददातीति पञ्चमं मरणदं, मरणफलकव्यापारबहुल-मिति यावत, एवं सङ्ग्रामप्रार्थनया तेषाम असन्धेयता दर्शितेति तात्पर्य्यार्थः, तदेवो-त्तरत्र स्फुटीकरिष्यति। पथ्यावक्त्रं वृत्तम्।

---

(क) नाथ! न लज्जन्ते एते, त्वमपि तावत् मा विस्मार्षीः।

सह। आर्य्ये! का खलु वेला (१) तत्रभवत्याः प्राप्तायाः, (२) किन्तु रोषावेशवशादार्य्येण न लक्षिता।

भीम। [दृष्ट्वा सादरम्]। देवि! समुद्धतामर्षैरस्माभिः आगताऽपि भवती नोपलक्षिता, अतो न मन्युं कर्त्तुमर्हसि।

द्रौप। णाह! उदासीणेसु तुम्हेसु मह मस्सु, ण उण कुविदेसु। (क)

भीम। यद्येवमपगतपरिभवमात्मानं समर्थयस्व (३)।

द्रौप। [सखेदं निःश्वसिति]।

भीम। [हस्ते गृहीत्वा, पार्श्वे समुपवेश्य, मुखमवलोक्य च]। किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि?।

द्रौप। णाह! किं पि उव्वेअकालणं तुम्हेसु सण्णिहिदेसु?। (ख)

भीम। किमिति नावेदयसि? [केशानवलोक्य]। अथवा किमावेदितेन।

(४) जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेष्वपि।
पञ्चालराजतनया वहते यदिमां दशाम्॥

---

(१) का खलु वेला कियत्यपि वेला, प्राप्तायाः, आगमनादारभ्य कियानपि कालो व्यतीत इत्यर्थः।

(२) प्राप्तायाः उपस्थितायाः।

(३) समर्थयस्व बुध्यस्व।

(४) जीवत्स्विति।—पाण्डुपुत्रेषु युधिष्ठिरादिषु, जीवत्सु विद्यमानेषु, दूरम् अत्यर्थम्, अप्रोषितेषु सन्निहितेष्वपीत्यर्थः, पञ्चालराजतनया द्रौपदी, यत् इमां दशाम् असंयतकेशत्वादिकां, या विधवाः प्रोषितभर्त्तृकाश्च वहन्तीति भावः, वहते प्राप्नोति। पथ्यावक्त्रं वृत्तम्।

---

(क) नाथ! उदासीनेषु युष्मासु मम मन्युः, न पुनः कुपितेषु। मन्युः खेदः।

(ख) नाथ! किमप्युद्वेगकारणं युष्मासु सन्निहितेषु?। अप्यर्थोऽत्र गम्यः।

द्रौप। हञ्जे बुद्धिमदिए! णिवेदेहि दाव णाहस्स, को अस्सो मह परिहवेण खिज्जइ। (क)

चेटी। जं देवी आणवेदि। [भीममुपसृत्य अञ्जलिं बद्ध्वा]। कुमाल! इदोवि अहिअं अज्ज मन्तुकालणं आसी देवीए। (ख)

भीम। किन्नामास्मादप्यधिकम्!! तत् कथय कथय।

(१) कौरव्यवंशदावेऽस्मिन् क एष शलभायते ?।
मुक्तवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव॥

चेटी। सुणादु कुमालो, अज्ज देवी अंबासहिदा सुभद्दाप्पमुहेण सवत्तिवग्गेण परिविदा अज्जाए गाधालिए पादवंदणं कादुं गदा आसी। (ग)

भीम। युज्यते, यतोऽभिवन्दनीया गुरव:, ततस्तत: ?।

चेटी। तदो पडिणिवुत्तमाणा भाणुमदीए दिट्ठा। (घ)

भीम। [सक्रोधम्]। आ:! शत्रोर्भार्य्यया दृष्टा ?। हन्त! स्थानं क्रोधस्य साम्प्रतं देव्या:। ततस्तत: ?।

(१) कौरव्येति।—कौरव्य: वंश इव, मानसराजहंसवत् श्लिष्टवंशशब्दस्य द्विधा प्रतीति, तत्र दावे दावानले, अस्मिन् मयीत्यर्थात्, मुक्तवेणी मुक्तकेशा, कृष्णा श्यामवर्णा, धूमशिखामिव मुक्तवेणीं मुक्तकेशरचना, कृष्णा द्रौपदी, स्पृशन् सन्, समासान्तविधेरनित्यत्वात् मुक्तवेणीमित्यत्र न कप्, शलभायते ? पतङ्ग इवाचरति ? यथा वह्नौ पतङ्गस्य मृत्युरेवं तस्यापि स्यादिति भाव:। पथ्यावक्त्रं वृत्तम्।

(क) हञ्जे बुद्धिमतिके! निवेदय तावन्नाथस्य, कोऽन्यो मम परिभवेन खिद्यते।

(ख) यत् देवी आज्ञापयति। कुमार! इतोऽप्यधिकमद्य मन्युकारणमासीत् देव्या:। इत: अनुभूयमानकेशसंयमनाभावरूपादस्मादित्यर्थ:।

(ग) शृणोतु कुमार, अद्य देवी अम्बासहिता सुभद्राप्रमुखेण सपत्नीवर्गेण परिवृता आर्य्याया गान्धार्य्या: पादवन्दनं कर्त्तुं गता आसीत्।

(घ) तत: प्रतिनिवर्त्तमाना भानुमत्या दृष्टा।

चेटी। तदो ताए देवीं पेक्खिअ सहीवअणादिस्सदिट्ठिए सगव्वं विहसिअ भणिदं। (क)

भीम। न केवलं दृष्टा !! उक्ता च, अहो ! किं कुर्मः ? ततस्ततः ?।

चेटी। अइ जण्णसेणि ! पंच गामा पत्थीअंति त्ति सुणीअदि, ता कीस दाणीं वि दे केसा ण संजमीअंति ?। (ख)

भीम। सहदेव ! श्रुतम् ?।

सह। आर्य्य ! किमिहोच्यते ? * दुर्य्योधनकलत्रं हि सा। पश्य—

स्त्रीणां हि साहचर्य्यात् भवन्ति चेतांसि भर्त्तृसदृशानि।
मधुराऽपि हि मूर्च्छयते (१) विषविटपिसमाश्रिता वल्ली ॥

भीम। बुद्धिमतिके ! ततो देव्या किमभिहितम् ?।

चेटी। कुमाल ! जइ परिजणहीणा भवे तदो देवी भणादि। (ग)

भीम। किं पुनरभिहितं भवत्या ?।

---

(१) मधुरेति।—विषविटपिम विषवृक्षं, समाश्रिता वल्ली लता, मधुराऽपि मनोहारिणी अपि, मूर्च्छयते मुग्धं करोति, आश्रयदोषादिति भाव:।

---

* [उचितमेवैतत्तस्याः] इति दर्पणेऽधिकः पाठः। अत्र "दृष्टान्तो यस्तु पक्षार्थं साधनाय निदर्शनम्" इति दर्पणोक्तदृष्टान्तरूपलक्षणं नाम नाटकाङ्गम्।

---

(क) ततस्तया देवीं प्रेक्ष्य सखीवदनदत्तदृष्ट्या सगर्वं विहस्य भणितम्।

(ख) अयि याज्ञसेनि। पञ्च ग्रामाः प्रार्थ्यन्ते इति श्रूयते, तत् कस्मादिदानीमपि ते केशा न संयम्यन्ते ?।

(ग) यदि परिजनहीना भवेत् तदा देवी भणति।

चेटी। कुमाल! मए एव्वं भणिदं, अइ भाणुमदि! तुम्हाणं अमुक्केसु केसेसु कधं अम्हाणं देवीए केसा संजमी-अंति? त्ति। (क)

भीम। [सपरितोषम्]। साधु बुद्धिमतिके! साधु, नदभिहितं यदस्मत्परिजनोचितम्। [स्वाभरणानि बुद्धिमतिकायै प्रयच्छति। अधोरमासनादुत्तिष्ठन्]। अयि पाञ्चालतनये! अलं विषादेन, किं बहुना, यत् करिष्ये तत् श्रूयताम्, अचिरेणैव कालेन।

(१) चञ्चद्भुजभ्रमितचण्डगदाऽभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिः
उत्तंसयिष्यति कचांस्तव देवि! भीमः॥

द्रौप। किं णाह! दुक्करं तुए परिकुविदेण। अणुगेण्हन्तु एदं ववसिदं दे भादरो। (ख)

---

(१) चञ्चद्भ्यां चलद्भ्यां, भुजाभ्यां भ्रमितया घूर्णितया, गदया सञ्चूर्णितमूरुयुगलं यस्य तादृशस्य, हननमात्रे बहुलशोणितालाभात् सञ्चूर्णितेत्युक्तम्; स्त्यानं स्तिमितं यथा तथा, अवनद्धं अलग्नं, यत् घनशोणितं सान्द्ररक्तं, तेन शोणपाणिः सन् तव कचान् उत्तंसयिष्यति भूषयिष्यति। उत्तम्भयिष्यतीति पाठे—संयमयिष्यतीत्यर्थः। अत्र "प्रतिक्रियाऽन्वितं वाक्यं प्रतीकारः स उच्यते" इति भरतोक्तप्रतीकाराख्यं नाटकाङ्गम्। "परिन्यासस्तु कार्य्यस्य भाविनो निश्चयादयम्" इत्युक्तलक्षणं परिन्यासाख्यं मुखाङ्गम्। वसन्ततिलकं वृत्तम्।

---

(क) कुमार! मया एवं भणितम्, अयि भानुमति! युष्माकममुक्तेषु केशेषु कथमस्माकं देव्याः केशाः संयम्यन्ते? इति।

(ख) किं नाथ! दुष्करं त्वया परिकुपितेन। अनुगृह्णन्तु एतत् व्यवसितं ते भ्रातरः। "गुणाख्यानं विलोभनम्" इति दर्पणोक्तं विलोभनाख्यं मुखाङ्गम्।

सह। अनुगृहीतमेतदस्माभिः।

[ नेपथ्ये महान् कलकलः ]। (१)

[ सर्वे सविस्मयमाकर्णयन्ति ]।

भीम। (२) मन्थायस्तार्णवाम्भःप्लुतकुहरवलन्मन्दरध्वानघोरः
कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योऽन्यसङ्घट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुपतिनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताड्यतेऽयम्? ॥

[ प्रविश्य सम्भ्रान्तः कञ्चुकी ]। कुमार! एष खलु भगवान् वासुदेवः।

[ सर्वे कृताञ्जलयः समुत्तिष्ठन्ति ]।

भीम। क्वासौ क्वासौ भगवान्?।

कञ्चु। पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्धः।

[ सर्वे सम्भ्रमं नाटयन्ति ]।

भीम। किं संयतः?।

कञ्चु। न हि न हि, संयमितुमारब्धः।

भीम। किं कृतं देवेन?।

---

(१) अकस्मादुत्थितोऽव्यक्तः महान् शब्दः कलकलः।

(२) मन्थेन मन्थनदण्डेन, आयस्तः विक्षिप्तः, चालितः, यदर्णवस्याम्भस्तेन प्लुतं व्याप्तं, कुहरं मध्यं यस्य तादृशस्य, चलतश्चलतः, मन्दरस्य तन्नामकाचलस्य, ध्वान इव घोरः गभीरः, "ढक्काशतसहस्राणि भेरीशतशतानि च। एकदा यत्र हन्यन्ते कोणाघातः स उच्यते॥" इति भरतोक्तलक्षणेषु कोणाघातेषु सत्सु, गर्जता प्रलयकालिकघनानां घटायाः समूहस्य, अन्योऽन्यसङ्घट्टः परस्परसङ्घर्षणं, तज्जातशब्द इव चण्डः भैरवः, कृष्णायाः द्रौपद्याः, कालरात्रेर्वा, क्रोधस्याग्रदूतः आगमनसूचकोऽग्रगामी दूतः, "सक्रोध" इति प्रसिद्धः, कुरुपतिनिधनस्योत्पातसूचकः निर्घातवातः प्रचण्डानिलः। स्रग्धरावृत्तम्।

कञ्चु । ततः स महात्मा दर्शितविश्वरूपतेजःसम्पात-मूर्च्छितमवधूय कुरुकुलम् अस्मच्छिबिरसन्निवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति ।

भीम । [ सोपहासम् ] । किं नाम !! दुरात्मा सुयोधनो भगवन्तं संयमितुमिच्छति !! । [ आकाशे दत्तदृष्टिः ] । आः दुरात्मन् ! कुरुकुलपांसुल ! एवमतिक्रान्तमर्य्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन (१) भवितव्यम् ।

सह । आर्य्य ! किमसौ दुरात्मा सुयोधनो वासुदेवमपि भगवन्तं स्वेन रूपेण न जानाति ? ।

भीम । वत्स ! मूढः खल्वयं दुरात्मा कथं जानातु !! पश्य

(२) आत्मारामा-विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ? ॥

---

(१) भगवदवमाननाजनितदुरितेनैवाचिरादेव नाशो भावीत्याशयः ।

(२) आत्मा आराम उपवनमिव, आनन्दस्थानत्वात्, तस्मिन् आ सम्यक्, विहिता रतिरनुरागो यैः ते, आत्मोपवने सम्यक् कृतानुरागा, योगिन इत्यर्थः, अथवा—आत्मनि आरमन्ते इत्यात्मारामाः, विहिते विशिष्टेहिते मोक्षसाधने एव, रतिरनुरागो येषामिति पदद्वयस्य आत्मन्येवाभिरता मुमुक्षवश्च इत्यर्थः, अनेन रजोगुणकर्मवैषयिकरागराहित्यमुक्तम् ; ज्ञानोद्रेकात् ज्ञानहेतुभूतसत्त्वाख्यविशेषस्य, उद्रेकात् रजस्तमोभ्यामनभिभवादाधिक्येन प्रकाशनात्, विघटिता विनाशिताः, तमसां ग्रन्थयः संशयविपर्य्यासादयो येषां ते, "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" इति श्रुतौ परमात्मज्ञानस्य सर्वसंशयनिवारकतया उक्तेस्तदेकवाक्यत्वात् तथैव तमोग्रन्थिशब्दार्थोऽवसेयः ; सत्त्वेषु सत्त्वधर्मेषु, मैत्रीकरुणामुदितादिषु, निष्ठा निःशेषेण स्थितिर्येषां ते, अथवा—विषयरागशून्यत्वात् सर्वोत्तमसमाश्रयाश्च विशुद्धसत्त्वप्रधाना इत्यर्थः, निर्विकल्पे कल्पनारहिते मितिमेयमानादिभेदशून्ये अखण्डज्ञानात्मके योगशास्त्रप्रसिद्धे, समाधौ ध्यानविशेषे, तमसां

आर्य्य मैत्रेय ! किमिदानीमध्यवस्यन्ति(१) गुरवः ? ।

कञ्चु । स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः । [ इति निष्क्रान्तः ] ।

[ नेपथ्ये कलकलानन्तरम् ] । भो भोः ! द्रुपदविराट-वृष्ण्यन्धकसहदेवप्रभृतयः अस्मदक्षौहिणीपतयः कौरवचमू-प्रधानयोधाश्च ! शृण्वन्तु भवन्तः ।

(२) यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।

---

तमःकार्य्याणां, ज्योतिषां सत्त्वगुणानां तत्कार्य्याणां, चाऽनुक्तसमुच्चयार्थे, "वा व्याहिकल्पोपमयोरेवार्थे च समुच्चये" इति कोषात्, अनुक्तानां रजसां च, परस्तात् काले प्रलयादौ देशे वा "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति श्रुतौ कार्य्यातीतत्वमुक्तं, तत्र वर्त्तमानं त्रिगुणातीतस्थानस्थमित्यर्थः, परस्तादिति "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" (५ । ३ । २७ पा० सू० ) इत्यस्तातिः, तस्य चातसर्थतया "षष्ठ्यतसर्थ—"इत्यादिना ( २ । ३ । ३० पा० सू० ) तमसामित्यादौ तद्योगे षष्ठी, तस्य च दिग्देशकालवृत्तिविषयत्वनियमेन परस्तात् परमिति द्वितीयान्तपरतया व्याख्यानमपव्याख्यानमेव, अस्तातेः प्रथमा-पञ्चमीसप्तमीभिन्नविभक्तौ अननुशासनात्, यं त्वमपि इदन्तया निर्वक्तुमशक्यत्वेन अनिर्वचनीयं, तत्र तत्रेति सर्वविषये परिविश्यमाणमित्यर्थः, बोधन्ते साक्षात् कुर्वन्ति, तं परात्मानम्, अमुं पूर्वप्रस्तावितं वासुदेवं देवं द्योतनशील, पुराणं पुराऽपि नवं कूटस्थं नित्यमपरिणामिनं, मोहान्ध मोहेनान्धः इवान्धः ज्ञानशक्तिरहितः, मोहात्मेति पाठे तु—मुह्यतीति मोहः, पचाद्यच्, मोहः मुग्धः, आत्मा अन्तःकरणं यस्य तादृशः, अयं दुर्य्योधनः, कथं वेत्ति ? जानाति ? वेदनसामग्र्यभावात् न ज्ञातुमर्हतीत्यर्थः । वेत्त्विति पाठे—सम्भावनायां लोट् । मन्दाक्रान्ता वृत्तं, "मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति तल्लक्षणात् ।

(१) अध्यवस्यन्ति कुर्वन्ति । अध्यवसायश्च इह उद्यमविशेषः ।

(२) सत्यमेव व्रतं तस्य भङ्गात् भीरुमनसा पक्षभङ्गे यः सत्यभङ्गस्तद्भीतेनेत्यर्थः, यत्नेन कोपावेशनिवारणस्य दुष्करतया यत्नातिशयेन इत्यर्थः, मन्दीकृतं वेग-

तत् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥

भीम। [ आकर्ण्य सहर्षामर्षम् ]। जृम्भतां जृम्भताम-प्रतिहतप्रसरमार्य्यस्य क्रोधज्योतिः। [ पुनर्नेपथ्ये कलकलः ]।

द्रौप। [ सविस्मयम् ]। णाह! किं दाणीं एसो [ * ] पलअजलहरघणत्थणिदमंसलो (१) खणे खणे समरदुंदुही ताड़ीअदि ?। (क)

---

राहित्येन अगितामिवाप्रचारितव्यापारीकृतामित्यर्थः, प्रभवता शान्तिप्रधानेन, कुरूणां शान्तिर्विनाशः कयोः प्रवराहित्यम्; युधिष्ठिरविक्रममन्थनकाष्ठविशेष इव, तेन सम्भृतमुत्पादितं, नृपस्य राज्ञो द्रुपदस्य, सुता द्रौपदी, तस्याः केशेषु अम्बरेषु च आकर्षणानि तैर्महत् बहुलीभूत, कुरूणां जनपदानां राजानः कुरवः, तद्राजार्थकस्य तद्धितस्य लुपि सिद्ध, ते वनमिव दाह्यत्वात् तस्मिन्, यौधिष्ठिरं क्रोधज्योतिः क्रोधो ज्योतिरिव, जृम्भते वेगवत्तया व्यापारान्वितं सत् सम्प्रकाशते इत्यर्थः। अत्र क्रोधज्योतिरित्यादौ उपमितसमास एव ग्राह्य, रूपकसमासे विस्तारणकेशाम्बराकर्षणजनितमहत्त्वयाऽज्योतिषोऽसम्बन्धादनन्वयापत्तेः। इह स्वस्था भवन्तु मयीत्यादिना बीजस्य प्रधाननायकाभिमतत्वेन सम्यगाधानात् समाधाननामकं नाटकाङ्गं, यथोक्तं दर्पणे, "बीजस्यागमनं यत्तु तत्समाधानमुच्यते" इति। शार्दूलविक्रीडितं वृत्तम्।

(१) घनस्तनितं निरन्तरगर्जितं, तदिव मांसलः गभीर इत्यर्थः। इह विद्रवाख्यो गर्भसन्धिः, यथोक्तं भरतेन, 'शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मत.' इति।

---

(क) नाथ! किमिदानीम् एष प्रलयजलधरघनस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते ?। युद्धं स्यान्न वेति संशयाना तूर्यरवानन्तरं कुतूहलितया जिज्ञासनात् परिभावनानामकं नाटकाङ्गं, यथोक्तं दर्पणे, "कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना" इति।

---

* [ चण्डघोसद्दालुणो ] [ इत्यधिकः पाठः ]।

* [ चण्डघोषदारुणः ]।

भीम। देवि! किमन्यत्, यज्ञः प्रवर्त्तते।

द्रौप। [सविस्मयम्]। को एसो जण्णो ?। (क)

भीम। रणयज्ञः, तथा हि,

(१) चत्वारो वयमृत्विजः स भगवान् कर्म्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः॥

सह। आर्य्य! गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम्।

भीम। वत्स! एते वयमुद्यता एव आर्य्यस्यानुज्ञामनुष्ठातुम्। [उत्थाय]। देवि! गच्छामो वयमिदानीं कुरुकुलक्षयाय। (२)

(१) वयं भीमादयः, ऋत्विजः ऋत्विगामिव पशुमारणाहुतिरूपहिंसाप्रक्षेपादिना ऋत्विक्त्वमस्माकं, तथा ऋत्विक्कृतयज्ञफलस्य यजमाने इव अस्मत्कृतरणयज्ञजयस्य राजन्येव भविष्यतीत्यपि ऋत्विक्त्वारोपेण सूचितम्, कर्म्मोपदेष्टा आचार्य्यः, उपदेश-साधर्म्यात् आचार्य्यत्वम्, सङ्ग्राम एवाध्वरो यज्ञः, तत्र दीक्षितः, दीक्षा यज्ञाङ्गव्रत-विशेषो जाताऽस्येति दीक्षितः कृतसङ्कल्पव्रतमात्रकारित्वमेव तस्य, अस्माभिरेव सर्व-कार्य्यस्य करणात् कृत्यान्तरे तस्य स्वयंकर्तृतेति भावः, पत्नी गृहीतव्रता केशसंस्कारादिराहित्यमेवेह साम्यात् यज्ञाङ्गव्रतं तत् गृहीतं ययेति विग्रहः; कौरव्याः कुरुषु भवाः "कुर्वादिभ्यो ण्यः" (४।१।१७२ पा० सू०) ण्यः, त एव, पशवः वध्यत्वात्, राजन्योपनिमन्त्रणाय क्षत्रियसमाजाह्वानाय, यशःप्रख्यापको दुन्दुभिः यशोदुन्दुभिर्वाद्यभेदः, स्फीतम् उच्चैः यथा तथा, रसति शब्दायते। अत्र उद्भेदनामा मुखसन्धिः, यथोक्तं भरतेन, "बीजप्ररोह उद्भेदः यत्किञ्चित् प्रभवात्मकः" इति। शार्दूलविक्रीडितं वृत्तम्।

(२) अत्र कारणनामा मुखसन्धिः, "उद्यमः प्रस्तुतार्थस्य कारणं परिकीर्त्तितम्" इति भरतवाक्यात्।

(क) क एष यज्ञः ?।

द्रौप। [ बाष्पं धारयन्ती ]। णाह! असुरसमराहि-मुहस्स हरिणो विअ मंगलं तुह्माणं होदु [ * ]। (क)

चेटी। अस्सं च देवी भणादि, णाह! तुह्मेहिं पुणोवि समरादो आअच्छिअ अहं आस्सासइदव्वा। (ख)

भीम। देवि! किमलीकाश्वासनेन।

(१) भूयःपरिभवक्लान्ति-लज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥

द्रौप। णाह! मा क्खु मा क्खु जण्णसेणीपरिहवुद्दीविद-कोवाणला अणवेक्खिदसरीरा संचरिस्सध, जदो अप्प-मत्तसंचरणिज्जाइ रिउबलाइं सुणीअन्ति। (ग)

भीम। अयि सुक्षत्रिये! समर्था वयमस्मिन् रणे परि-क्रमितुम्। शृणु—

(२) अन्योऽन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ।

(१) भूयान् बहुलः, यः पराभवस्तेन या क्लान्तिर्लज्जा च ताभ्यां विधुरितं, बन्धुरितेति पाठे—व्याप्तम्, आननं वदनं यस्य तम्, अथवा—भूय इति न पश्यसीति क्रियाविशेषणं, भविष्यत्सामीप्ये लट्, न द्रक्ष्यसीत्यर्थः। पथ्यावक्त्रं वृत्तम्।

(२) आस्फालः सङ्घर्षणम्। भिन्नो विदारितः। वसा हृन्मेदः, "वर्षौ" इति

(क) नाथ! असुरसमराभिमुखस्य हरेरिव मङ्गलं युष्माकं भवतु।

(ख) अन्यच्च देवी भणति, नाथ! युष्माभिः पुनरपि समरादागत्य अहम् आश्वासयितव्या।

(ग) नाथ! मा खलु मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनपेक्षितशरीराः सञ्चरिष्यथ, यतोऽप्रमत्तसञ्चरणीयानि रिपुबलानि श्रूयन्ते।

* [ जं च अंबा कुंदी आसासदि तद् तुह्माणं होदु ]।

* यच्च अम्बा कुन्ती आशास्ते तत् युष्माकं भवतु।

स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्य्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥

[ इति निष्क्रान्ताः (१) सर्वे ]।

प्रथमोऽङ्कः।

---

## द्वितीयोऽङ्कः।

ततः प्रविशति कञ्चुकी।—

कञ्चु। आज्ञापितोऽस्मि (२) महाराजदुर्य्योधनेन— विनयन्धर! गच्छ त्वम्, अन्विष्यतां (३) देवी भानुमती अपि (४)

---

प्रविष्टं, मस्तिष्कं क्लोमं, शिरःस्थघृताकारद्रव्यविशेषः, तान्येव पङ्कस्तस्मिन्, मग्नानां स्यन्दनानामुपरि यः पदन्यासः स एव विक्रान्तपत्तिर्विक्रमशालिसेना यत्र तादृशे, स्फीतासृजः प्रवाहैव सुतरुधिरस्य, पानगोष्ठ्या पानार्थसजातीयसभायां, रसन्तः शब्दायमानाः, अशिवाः अमङ्गलसूचकाः, याः शिवाः शृगालिकाः, ता एव तूर्य्यः मर्दलनामवाद्यं, तेन नृत्यन् कबन्धोऽशिरस्ककलेवरं यत्र तादृशे, सङ्ग्रामैकार्णवान्तः-पयसि, एकार्णवः प्रलयार्णवः, तस्यैव समुद्राणां जलप्रवेशेनैकरूपतापत्तेः, सङ्ग्रामः एकार्णवान्तःपय इव, गाम्भीर्य्येण दुस्तरत्वेन च सङ्ग्रामस्य, तस्मिन् तत्र, पाण्डु-पुत्राः सञ्चरितुं पण्डिता इत्यर्थः। सङ्ग्रामेत्यादौ उपमितसमासात् पूर्वोक्तविशेषण-द्वयसङ्गतिः, रूपकसमासे तदसङ्गतिरिति बोध्यम्। स्रग्धरावृत्तम्।

(१) "पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गमः" इत्युक्तेः प्रविष्टपात्राणामङ्कशेषे निष्क्रान्तेरावश्यकत्वात् निष्क्रान्ता इत्युक्तम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते
वेणीसंहारनाटकव्याख्याने प्रथमोऽङ्कः।

---

(२) आज्ञापितोऽस्मीत्यत्र समानविभक्त्या तृतीयान्तेनान्वयः।

(३) अन्विष्यताम् अनुसन्धीयताम्।

(४) अपि प्रश्ने।

निवृत्ता अम्बायाः पादवन्दनसमयाच्च वेति, यतस्त्वां विलोक्य निहताभिमन्यवो राधेयजयद्रथप्रभृतयः क्षत्रियाः समरभूमिं गत्वा सभाजयितव्याः (१) इति, तन्मया द्रुततरं गन्तव्यमिति। अहो! प्रभविष्णुता (२) महाराजस्य, यन्मम जरसाऽभिभूतस्य मर्य्यादामात्रमेवावरोधव्यापारः; (३) अथवा किमिति जरामुपालभामहे? यतः सर्वान्तःपुरिकाणामयमेव व्यवहारिको वेशश्चेष्टा च, (४) तथा हि,

(५) नोच्चैः सत्यपि चक्षुषीक्षितुमलं श्रुत्वाऽपि नाकर्णितं
शक्तेनाप्यधिकार इत्यधिकृता यष्टिः समालम्ब्यते।
सर्वत्र स्खलितेषु दत्तमनसा यातं मया नोद्धतं
सेवास्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम्?॥

---

(१) सभाजयितव्याः सम्मानपूर्वकमभिनन्दनीयाः।

(२) प्रभविष्णुता प्रभावशालिता, यत् बलादसमर्थस्य जरयाऽभिभूतस्यापि मम अवरोधव्यापारस्तद्दायित्वमिति भावः।

(३) अवरोधव्यापारः अन्तःपुरकर्मचरणं, जरसाऽभिभूतस्य असामर्थ्येऽपि प्रभो-राज्ञयैव मर्य्यादाहेतुना सर्वकर्मनिर्वाह इति भावः।

(४) सर्वान्तःपुरिकाणामन्तःपुरेऽधिकृतानां सर्वेषामेव, व्यवहारिकस्तद्व्यवहारयोग्यः, अयं मदीयवेशप्रायः, वेशः, चेष्टा च मद्विधेव, तथा चान्तःपुरेऽधिकृतैः मद्विधवेशचेष्टावद्भिर्भवितव्यम्, अन्यथा स्त्रीदूषणादिशङ्कया ततोऽपसारणं लभ्येतेति भावः।

(५) स्वानुभूतवेशचेष्टादिवर्णनेनान्तःपुरोपयोगिवेशचेष्टादिकं दर्शयति, नोच्चैरित्यादि।—चक्षुषि सत्यपि उच्चैरूर्ध्वं, ईक्षितुं द्रष्टुं न पर्य्याप्तः, तथा चान्तःपुराधिकारिणा अधोनयनेन भवितव्यमिति दर्शितम्; एवं श्रुत्वाऽपि नाकर्णितं श्रुतवताऽप्यश्रुतवतेव व्यवहर्त्तव्यमिति भावः; यष्टिं विना गन्तुं शक्तेनापि अधिकृता मया यष्टिरवलम्ब्यते, अशक्तताख्यापनार्थं न त्वावश्यकार्थं, तथा च गमनशक्तिमताऽपि तद-शक्तत्वख्यापनाय यष्टिमवलम्ब्यैव गन्तव्यमिति भावः; अधिकार इति कञ्चुकिनो यष्टिधारणमवश्यं कर्त्तव्यमिति हेतोः यष्ट्यवलम्बनमित्यपि सूचितम्; किञ्च, सर्वत्र

[परिक्रम्य दृष्ट्वा आकाशे]। (१) विहङ्गिके! अपि श्वश्रूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती? [कर्णं दत्त्वा]। किं कथयसि? आर्य्य! एषा भानुमती देवी पत्युः समरविजयाऽऽशंसया निर्वर्त्तितगुरुपादवन्दना अद्य प्रभृत्यारब्धनियमा बालोद्याने तिष्ठतीति? तद्भद्रे! गच्छ त्वमात्मव्यापाराय, यावदहमप्यत्रस्थां देवीं महाराजस्य निवेदयामीति। [परिक्रम्य]। साधु पतिव्रते! साधु, स्त्रीस्वभावे वर्त्तमाना वरं (२) भवती, न पुनर्महाराजः; योऽयमुद्यतेषु बलवत्सु अबलवत्सु वा वासुदेवसहायेषु पाण्डुपुत्रेषु अरिषु च अद्याप्यन्तःपुरविहारमनुभवति।

[विचिन्त्य]। इदमयथातथं (३) स्वामिनश्चेष्टितं, कुतः?
(४) आ-शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुनेः
तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।

---

सर्वस्थानेषु, प्रज्वलितेषु प्रत्यरेषु, पतनसूचनव्यापारेषु, दत्तमनसा कृतधिया, उद्धतमुत्काटं, न ध्यातं, यत्तु समर्थेनापि तथागमने पतितः स्यामिति सूचनार्थमेव नोद्धतगमनं कृतमिति भावः ; तथा च, यदेतत् मे मम, कर्म तत् किं नाम जरया कृतम्? अपि तु नैवेत्यर्थः, तत्र विशेषणेन सूचयति, सेवेत्यादि—सेवया स्वीकृतमायत्तीकृतं, जीवितमायुःकालो यस्य तस्य मम, सेवावशंवदतया धनाशयैव, तथा कृतं, न तु जरया, एवञ्च जरोपालम्भो व्यर्थः, धनाशैवोपालभ्येति निर्गलितार्थः। शार्दूलविक्रीडितं वृत्तम्।

(१) "दूरस्थाभाषणं यत् स्यादशरीरनिवेदनम्। परोक्षान्तरितं वाक्यं तदाकाशे निगद्यते॥" इति भरतवाक्यात् विहङ्गिका तन्नामिका परिचारिका दूरस्थां सम्बोध्य वदतीति शेषः।

(२) वरं मनागभीष्टा, "मनागिष्टे वरं यत्तु चविदाच तदव्ययम्" इति कोषः।

(३) अयथातथमनर्थम्।

(४) शस्त्रग्रहणारम्भाकुण्ठपरशोरनभिभूतपराक्रमस्य, तस्य प्रसिद्धस्य परशुरामस्य, जेता, "उद्योगपर्वणि अम्बोपाख्याने १८६ अध्याये "जितोऽस्मि भीष्मेति

प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥

सर्वथा दैवतं नः स्वस्ति करिष्यतीति, यावत् अवस्थां (१) देवीं महाराजस्य निवेदयामि। [ इति निष्क्रान्तः ]। [ विष्कम्भकः ] (२)

ततः प्रविशत्यासनस्था देवी भानुमती सखी चेटी च।

सखी। सहि भाणुमदि! कीस दाणीं तुमं सिविणअदंसणमेत्तस्स किदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एव्वं विअलिअधीरभावा अतिमेत्तं सतप्पसि?। (क)

चेटी। भट्टिणि! सोहणं भणादि सुवअणा, सिविणंतो जणो किं ण क्खु प्पलवादि?। (ख)

---

सुमन्दबुद्धि" इत्यन्ता सा कथाऽनुसन्धेया, सः अयं भीष्मः पाण्डुसुतैः अर्जुनादिभिः, मर्षे घातितः अस्य राज्ञः तापाय न, प्रौढाः प्रगल्भाः, ये अनेके धनुर्धरा महारथा एव, अरयस्तेषां विजयेन श्रान्तस्य एकाकिनोऽसहायस्य, द्रोणकृतव्यूहमध्ये कस्यापि प्रवेशाभावात्, बालस्याल्पवयस्कस्य, अरातिलूनधनुषः, समासान्तविधेरनित्यत्वान्नानङादेशः, धनुर्हीनस्य इत्यनेन सुजेयत्वात्तथा हर्षस्थानाभावेऽपि हर्षस्थानत्वेनाङ्गीकरणमयथार्थमिति भावः, अभिमन्योर्वधात् प्रीतः। अभिमन्युवधकथा च "एवं विनिहतो राजन्! एको बहुभिराहवे। क्षोभयित्वा चमूं सर्वाम्" इत्यन्ता द्रोणपर्वणि ४९ अध्याये अनुसन्धेया। "विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः" इति दर्पणेऽधिकारिण एव विष्कम्भके वधवर्णननिषेधः, न तु सेनापतीनामिति तद्वर्णनेऽपि न क्षतिः। शार्दूलविक्रीडितं वृत्तम्।

(१) नियमार्थे बालोद्यानस्थानस्थाम्।

(२) "वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥" इति दर्पणकारः। अत्र च वृत्तयोः भीष्मवधाभिमन्युवधयोर्वर्तिष्यमाणस्यान्तःपुरविहारस्य च सूचनात् विष्कम्भकत्वमिति बोध्यम्।

---

(क) सखि भानुमति! कस्मादिदानीं त्वं स्वप्नदर्शनमात्रस्य कृते अभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वा एवं विगलितधीरभावा अतिमात्रं सन्तप्यसे?।

(ख) भर्त्रि! शोभनं भणति सुवदना, स्वपन् जनः किं न खलु प्रलपति?।

भानु। हञ्जे! एव्वं णेदं, मम उण अकुसलदंसणं पड़िभादि सिविणअम्। (क)

सखी। पिअसहि! जइ एव्वं ता कधेहि सिविणअं जं अम्हेवि पडिट्ठावअंतीओ धम्मप्पसंसाए देवदाणं संकीत्तणेण [ दूव्वादि ] * पड़िग्गहेण अ पडिहरिस्सामो। (ख)

चेटी। सोहणं क्खु भणादि सुवअणा, अकुसलदंसणावि सिविणआ देवदाणं प्पसंसाए कुसलपरिणामा होंति त्ति सुणीअदि। (ग)

भानु। जइ एव्वं ता कहइस्सं, अवहिदा दाव होहि। (घ)

सखी। अवहिदह्मि, कहेदु पिअसही। (ङ)

भानु! हला! भएण विसुमरिदह्मि, ता चिट्ठ जाव सव्वं सुमरिअ कहइस्स। (च) [ इति चिन्तां नाटयति ]।

ततः प्रविशति दुर्य्योधनः काञ्चुकी च।

दुर्य्यो। सूक्तमिदं कस्यचित्।

---

(क) हञ्जे। एवं न्विदं, मम पुनरकुशलदर्शनं प्रतिभाति स्वप्नदर्शनम्।

(ख) प्रियसखि। यद्येव तत् कथय स्वप्नं यद्वयमपि प्रतिष्ठापयन्त्य धर्मप्रशंसया देवाना सङ्कीर्त्तनेन दूर्व्वादिपरिग्रहेण च परिहरिष्यामः। यथार्थस्यान्यथापरतया स्थापनं प्रतिष्ठापनं, तत् कुर्व्वत्यः शुभार्थतया सम्पादयन्त्य इत्यर्थः।

(ग) शोभनं खलु भणति सुवदना, अकुशलदर्शनाः अपि स्वप्ना देवानां प्रशंसया कुशलपरिणामा भवन्तीति श्रूयते।

(घ) यद्येवं तत् कथयिष्ये, अवहिता तावद्भव।

(ङ) अवहिताऽस्मि, कथयतु प्रियसखी।

(च) सखि। भयेन विस्मृताऽस्मि, तत्तिष्ठ यावत् सर्वं स्मृत्वा कथयिष्ये।

---

* [ दुजादिपडिग्गहेण ]

* द्विजातिसम्प्रदानकप्रतिग्रहेणेत्यर्थः।

(१) गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः।
करोति महतीं प्रीतिमपकारोऽपकारिषु ॥

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतम् अभिमन्युमुपश्रुत्योच्छ्वसितमिव (२) नश्चेतसा।

कञ्चु। देव! नेदमतिदुष्करमाचार्य्यशस्त्रप्रभावाणां (३) कर्णजयद्रथयोर्वा, काऽत्र श्लाघा?।

राजा। विनयन्धर! किमाह भवान्? एकाकी (४) बहुभिर्बालो लूनशरासनश्च निहतः? इति। पश्य—

(५) हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति॥

कञ्चु। [सवैलक्ष्यम्]। देव! नैवेदं कल्पयितुम् (६) अर्हसि,

---

(१) अपकारिषु शत्रुषु, गुप्त्या गोपनेन, साक्षात् प्रत्यक्षेण, स्वयमात्मना, अन्येन कृतोऽल्पोऽप्यपकारः प्रीतिं करोतीत्यन्वयः। पथ्यावक्त्रं वृत्तम्।

(२) प्रीत्या दीर्घनिःश्वासो हि उच्छ्वासः, इह तु चेतसः प्रीत्याश्रयत्वेन स्फूर्त्तिमात्रे उपचरितम्।

(३) आचार्य्यात् शिक्षितशस्त्राणां प्रभावो महाराजस्येत्यर्थात्, तन्महिम्नैवेदं सम्पन्नं, न त्वन्यस्य कस्याप्यत्र श्लाघेति कञ्चुकिनोऽभिप्रायः।

(४) काऽत्र श्लाघेति शब्दश्रवणमात्रेणैवान्यार्थपरकञ्चुकिवाक्यस्य स्वपक्षीयकृतानर्हकर्मपरत्वेन निन्दापरत्वमुत्प्रेक्ष्याह, एकाकीत्यादि।—कृतापराधस्य सर्वमेव वाक्यं स्वकृतापराधसूचकं भवतीति लोकप्रसिद्ध, यथा गृहे कोऽप्यनुक्तो दधिभोजनरूपापराधवतः "न मया दधि भुज्यते" इत्यादि उक्तिः, तद्वदत्रापीति भावः।

(५) जरति वृद्धे, गाङ्गेये भीष्मे, शिखण्डिनं द्रुपदपुत्रं, पुरस्कृत्य अग्रे निधाय, हते, पाण्डुपुत्रैरित्यर्थात्, शिखण्डिपुरोनिधानपूर्वकं वृद्धस्य छिन्नधनुषो बालस्य च हनने तुल्ये श्लाघाश्लाघे इति भावः। अत्र लेशाख्यं नाटकाङ्ग, यथोक्तं दर्पणे, "स लेशो भण्यते वाक्यं यत् सादृश्यपुरःसरम्" इति। शिखण्डिपुरोनिधानेन भीष्मवधकथा च भीष्मपर्वणि १२० अध्याये अनुसन्धेया। पथ्यावक्त्रं वृत्तम्।

(६) कल्पयितुम् अन्यपरवाक्यस्य अन्यपरत्वमुत्प्रेक्षितुम्।

यतस्तव पौरुषप्रतीघातः (१) अस्माभिर्नावलोकितपूर्वं इत्यत एवं विज्ञापयामि।

राजा। एवमिदम्।

(२) सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनम्॥

कञ्चु। [ कर्णौ पिधाय सभयम् ]। शान्तं पापं, प्रतिहतम् अमङ्गलम्।

राजा। विनयन्धर। किं मयोक्तम्?।

कञ्चु। [ सहभृत्यगणमित्यादि (३) पठित्वा ]। एतत् विपरीतमभिहितं देवेन।

राजा। विनयन्धर! अद्य खलु भानुमती यथापूर्वं माम् अनामन्त्र्य वासभवनात् प्रातरेव निष्क्रान्तेति आक्षिप्तमिव (४) मे चेतः, तदादेशय तमुद्देशं यत्रास्ते भानुमती।

कञ्चु। इत इत एतु देवः।

---

(१) द्रोणाचार्य्याधिष्ठितसैन्यप्रभावादिमहिम्नः प्रतीघातः कार्य्यसाधनत्व-व्याघातः।

(२) पौरुषप्रतीघाताभावेन कञ्चुकिना प्रशंसिते तद्वचनात् दर्पोन्मिके अन्यथा वक्तव्ये अन्यथोक्तमिति दर्शयन्नाह, सहभृत्यगणमिति।—विभाषया सहशब्दस्य सादेश-विधानादुभयथा प्रयुक्तम्। न चिरादल्पकालेन। अत्र पाण्डुसुतं सुयोधन इति वक्तव्ये पाण्डुसुतः सुयोधनमिति कर्मकर्तृव्यत्ययेन प्रयुक्तम्; अत एवात्र भ्रंशाख्यं नाटकाङ्गं, यथोक्तं दर्पणे, "दृप्तादीनां भवेत् भ्रंशो वाच्यादन्यपरं वचः" इति।

(३) राज्ञस्तात्पर्य्यविषयीभूतयोर्विभक्त्योः विपर्य्ययमवेत्य तत्र श्लोके पाण्डुसुतं सुयोधन इत्येव पठित्वा, एतद्विपरीतं द्वितीयान्तं पाण्डुसुतपदं प्रथमान्ततया, प्रथमान्तं च सुयोधनपदं द्वितीयान्ततया कर्मकर्तृवैपरीत्येन पठितमित्यर्थः।

(४) आक्षिप्तमिव आकृष्टमिव, उद्वेजितमिवेति यावत्।

उभौ। [ परिक्रामतः ]।

कञ्चु। [ पुरोऽवलोक्य समन्ततो गन्धमाघ्राय ]। देव! पश्य पश्य एतत् तुहिनकणशिशिरसमीरणोद्वेल्लितबन्धनच्युतशेफालिकाविरचितकुसुमप्रकरम्, ईषदालोहितमुग्धवधूकपोलपाटललोध्रप्रसूनविजितश्यामलतासौभाग्यम्, (१) उन्मीलितबहुलकुन्दकुसुमसुरभिशीतलं, प्रभातकालरमणीयम्, अग्रतस्ते बालोद्यानं, तदवलोकयतु देवः। तथा हि,

(२) प्रालेयमिश्रमकरन्दकरालकोषैः
पुष्पैः समं निपतिता रजनीप्रबुद्धैः।
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध-
संसूचितानि कमलान्यलयः पतन्ति॥

राजा। [ समन्तादवलोक्य ]। विनयन्धर! इदमपरममु-ष्मिन्नुद्याने रमणीयतरम्। पश्य—

(३) जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टैः
हस्तैर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः।

---

(१) तुहिनकणैर्हिमलवैः, शिशिरः शीतलः; उद्वेल्लिता चालिता, अत एव बन्धनच्युता शेफालिका। कपोलमिव पाटलं श्वेतरक्तं यत् लोध्रप्रसूनं तन्नामपुष्पं, तेन विजितं लघूकृतं, श्यामलतायास्तन्नामकलतायाः, सौभाग्यं सौन्दर्यं यत्र तथोक्तम्। "सुभगः सुन्दरे प्रिये" इति कोषः। भावे ष्यञ् सुभगादित्वात् द्विपदवृद्धौ सौभाग्यम्।

(२) प्रालेयेन मिश्रो मिलितः, यो मकरन्दः पुष्परसः, तेन करालः दन्तुरः, नतोन्नतः, कोषो मध्यं येषां तादृशैः, रात्रिविकसितैः कुसुमैः सम निपतिताः भूमौ पतिताः, आश्रयपतने आश्रितपतनमुचितमेवेति भावः; अलयः विकाशोन्मुखानि कमलानि पतन्ति गच्छन्ति, पतेर्गमनार्थत्वात् सकर्मकत्वं, स्पन्दनमात्रे एवाकर्मकत्वम्; सर्वो हि विनाशोन्मुखं हित्वा समुदयोन्मुखमाश्रयतीति लोकप्रसिद्धमिदमिति भावः। वसन्ततिलकं वृत्तम्।

(३) जृम्भारम्भो विकाशोपक्रमः, तेन विततानि विकाशोन्मुखानि, यानि दलानि

स्त्रीभिः सार्द्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
मुष्णन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥

कञ्चु। देव ! नन्वेषा भानुमती सुवदनया तरलिकया च पर्य्युपास्यमाना तिष्ठति, तदुपसर्पतु देवः ।

राजा । [ दृष्ट्वा ] । आर्य्य विनयन्धर ! गच्छ त्वं साङ्ग्रामिकं रथमुपकल्पयितुम्, अहमपि देवीं दृष्ट्वाऽनुपदमागत एव ।

कञ्चु । एष कृतो देवादेशः । [ इति निष्क्रान्तः ] ।

सखी । पिअसहि ! अवि सुमरिदं तुए ? । (क)

भानु । सहि ! सुमरिदं, अज्ज किल प्पमदवणे आसीणाए मम अग्गदो केणावि अदिसइददिव्वरूवेण णउलेण अहिसदं वावादिदं । (ख)

---

पत्रपर्वाणि, तेषामुपान्तः समीपं, जालं गवाक्षस्य छिद्रमिव, तेन प्रविष्टैः भानोः सूर्य्यस्य, हस्तैः करैरिव किरणैः, स्पृश्यमानाः, अत एवोष्णकरस्पर्शेन विबुद्धाः निद्रान्तं गताः, नृपतय इव द्विरेफाः भ्रमराः, घनपरिमलः सान्द्रसौरभस्तस्य स्तोकेन लेशेन, लक्ष्योऽनुमेयः, अङ्गरागो येषां तादृशाः सन्तः, विकचायाः विकसितायाः, नलिन्याः गर्भं शय्येव तां, स्त्रीभिः स्वनायिकाभिः, सह मुष्णन्ति । स्तोकशब्दस्य "करणे च स्तोकाल्पेत्यादि असत्त्ववचनस्य" ( २ । ३ । ३३ पा० सू० ) इति निर्देशात् क्वचिद्द्रव्यपरत्वमपि सूचितं, तेनाल्पतापरत्वेन षष्ठीसमासः सूपपादः । मन्दाक्रान्ता वृत्तम् ।

---

( क ) प्रियसखि ! अपि स्मृतं त्वया ? ।

(ख) सखि ! स्मृतम्, अद्य किल प्रमदवने आसीनाया मम अग्रतः केनाप्यतिशयितदिव्यरूपेण नकुलेन अहिशतं व्यापादितम् ।

उभे। [अपवार्य्य (१) आत्मगतम्]। सांतं पावं! सांतं पावं! [प्रकाशम्]। (२) तदो तदो?। (क)

भानु। संदावावगहीदहिअआए पुणो वि मए विसुमरिदं। (ख)

राजा। [अवलोक्य]। अहो! देवी भानुमती सुवदनातरलिकाभ्यां सह किमपि मन्त्रयमाणा (३) तिष्ठति; भवतु, अनेन लताजालेनान्तरितः शृणोमि तावदासां विस्रब्धालापम्। [इति तथा कृत्वा स्थितः]।

सखी। अइ! अलं संदावेण, कहेदु पिअसही। (ग)

राजा। किं नु खल्वस्याः सन्तापकारणम्? अथवाऽनामन्त्य इमामद्य वासभवनान्निष्क्रान्तोऽस्मीति समर्थित: (४) एवास्या मयि कोपः। अयि भानुमति! अविषयः खलु दुर्य्योधनो भवत्याः कोपस्य।

(५) किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया?
निद्राच्छेदविवर्त्तनेष्वभिमुखी नाद्यासि सम्भाविता?।

---

(१) अपवार्य्य अन्यस्य रहस्यमप्रकाश्य, "तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाशते॥" इति लक्षयित्वा दर्पणकृता परावृत्यान्यस्य रहस्यकथनमपवारितमिति व्याख्यातम्।

(२) "सर्वश्राव्यं प्रकाशं स्यात्" इति दर्पणोक्तेः सर्वान् श्रावयित्वेत्यर्थः।

(३) मन्त्रयमाणा आलपन्ती।

(४) समर्थितः सम्भावितः।

(५) कण्ठे मम कण्ठे। भुजलतापाशस्त्वदीयभुजबन्धनम्। निद्राया आच्छेदः

---

(क) शान्तं पापम्! शान्तं पापम्!। ततस्ततः?।

(ख) सन्तापावगृहीतहृदयया पुनरपि मया विस्मृतम्।

(ग) सखि! अलं सन्तापेन, कथयतु प्रियसखी।

अन्यस्त्रीजनसङ्कथालघुरहं स्वप्ने त्वया लक्षितः ?
दोषं पश्यसि कं प्रिये ! परिजनोपालम्भयोग्ये मयि ? ॥

[ विचिन्त्य ] । अथवा

(१) इयमस्मदुपाश्रयैकचित्ता मनसा प्रेमनिबद्धमत्सरेण ।
नियतं कुपिताऽतिवल्लभत्वात् स्वयमुत्प्रेक्ष्य ममापराधलेशम् ॥

तथाऽपि किं वक्ष्यतीति शृणुमस्तावत् ।

भानु । अहं तदो तस्स अदिसइदिव्वरूविणो णउलस्स दंसणेण उस्सुआ जादा । (क)

---

ईषद्भङ्गः, तेन यत् विवर्त्तनं पार्श्वपरिवर्त्तनम्, (एकपार्श्वेन सुप्तस्यान्यपार्श्वे स्वापार्थं चलनम्) तेषु, अभिमुखी आभिमुख्यं गताऽपि, पूर्वदिवसीयार्द्धरात्रादारभ्यान-दिवसीयार्द्धदिवसोऽद्यतनशब्दार्थः, तेन पूर्वदिवसीयाहवारम्भेऽपि अद्यतनत्वात् अद्येत्युक्तिः, न सम्भाविता ? आलिङ्गनसम्भाषणादिना न सम्मानिता ? इति सूचितः । स्वप्ने इत्यनेन जागरणे तथादर्शनं कदाऽपि न सम्भवति ; अनेन दाक्षिण्यमात्मनः सूचितम् । परिजने इव परिचारके इव, उपालम्भयोग्ये निन्दासहितभर्त्सनाऽर्हे कं दोषं पश्यसि ? न कमपीत्यर्थः, नितान्तानुकूलतया दोषस्पर्शित्वमसम्भावितं काकुध्वनिना व्यज्यते । अत्र दोषराहित्यद्योतनाय दोषलेशमिति वक्तव्यम् । शार्दूलविक्रीडितं वृत्तम् ।

(१) अस्मदुपाश्रय, समवलम्बनं यस्य तादृशम्, एकचित्तं यस्याः सा, अत एकशब्दस्य एवार्थपरतया प्रसिद्धेः मदाश्रयमात्रचित्तेत्यर्थः, अस्मदित्यत्र युष्मदस्मदोरेकत्वे विभाषया बहुत्वानुशासनात् बहुत्वपरतया न मदादेशः ; प्रेम्णैव कारणाभावेऽपि, निबद्धः पालितः, मत्सरो यत्र तादृशेन, प्रेम्णस्यैव स्वभावः यदकारणेऽपि मात्सर्यमुत्पाद्यते इति ; एवंविधेन हृदा उत्प्रेक्ष्य कल्पनामात्रेणोद्भाव्य अतिवल्लभत्वात् अतिप्रियत्वात्, अपराधलेशोऽपि दुःसहः किं पुनर्बहुलापराधः ? इति सूचयन् लेशमित्याह, नियतमित्युत्प्रेक्षायाम्, इयम् उक्तेन हेतुना प्रणयकुपितेत्युत्प्रेक्षे इत्यर्थः । औपच्छन्दसकं वृत्तं, "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ तदेवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम् ॥" इति तल्लक्षणात् ।

---

(क) अहं ततस्तस्य अतिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता ।

राजा। किं नाम!! अतिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता!! तत्किमनया माद्रीसुतेऽनुरक्तया वयमेवं विप्रलब्धाः (१)। सोत्प्रेक्षम्। (२) इयमस्मादित्यादि पठित्वा]। मूढ दुर्योधन। कुलटाविप्रलभ्यमानमात्मानं बहुमन्यमानोऽधुना किं किं न वक्ष्यसि? [*] अहो! एतदर्थमेवास्याः (३) प्रातरेव विविक्तस्थानाभिलाषः सखीजनकथासु च पक्षपातः। दुर्योधनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः (४)। आः पापे! मत्परिग्रहपांसुले! (५)

(६) तद्भीरुत्वं तव मम पुरः साहसानीदृशानि!!
श्लाघा साऽस्मद्वपुषि विनयव्युत्क्रमेऽप्येष रागः!!।
तच्चौदार्यं मयि जडमतौ चापले कोऽपि पन्थाः!!
ख्याते तस्मिन् वितमसि कुले जन्म कौलीनमेतत्!!॥

(१) विप्रलब्धाः प्रतारिताः, भ्रान्ता इति वा, प्राक्तन् पक्षे अनयेति हेतौ तृतीया। अन्यथास्वभावाया अन्यथाज्ञानमिह विप्रलम्भः।

(२) सोत्प्रेक्षं सस्मरणं, पूर्वोत्प्रेक्षितविषयस्मरणपूर्वकमिति यावत्, तथा च स्मरति किं किं न वक्ष्यसीति सोत्प्रासमित्यर्थं, स्मरणार्थयोगे अतीतकाले लृट्।

(३) माद्रीसुतकुलटाभावानुगुणमस्याश्चेष्टादिकमुत्प्रेक्ष्य व्यभिचारपरत्वमुपन्यस्यति, एतदर्थमेवेति।

(४) अविज्ञातः अनिश्चितः, बन्धकीहृदयस्य, कुलटाचित्तस्य, सारः स्थैर्यं येन। अन्यथा स्थिरीकृतचित्ताया अन्यथोत्प्रेक्षणमिह परिभ्रमः।

(५) मत्परिग्रहः (मत्कलत्रं) भूत्वा पांसुला दुश्चरिताऽतोऽत्यन्तानुचितमिति सम्बोधनेन द्योतयन्नाह, मत्परिग्रहेति।

(६) तत् अनुभूतं, मत्समीपे भीरुत्वं तत्सूचकचेष्टादिकं प्रकाशितं, तेन च तदा भीरुत्वमनुमित्याऽनुभूतमित्यर्थः, ईदृशानि परपुरुषसङ्गमरूपाणि, साहसानि बहुना यत्नेन कृतानि, तेनाभीरुत्वं प्रकाशितम्, एवं च भीरुत्वाभीरुत्वयोः समावेश-

* [किं वक्ष्ये इत्यादि पठित्वा दिशोऽवलोक्य] क्वचिदधिकः पाठः।

सखी। तदो तदो ?। (क)

भानु। तदो अहं तुरिदं आसणट्ठाणं एदं लदामंडवं पविट्ठो, सो वि मं अणुसरंतो एव्व लदामंडवं पविट्ठो। (ख)

राजा। अहो! कुलटोचितमस्याः पापायाः अश्लीलत्वम्। (१)

(२) यस्मिंश्चिरप्रणयनिर्भरबद्धभावम्

आवेदितो रहसि मत्सुरतोपभोगः।

तत्रैव दुश्चरितमद्य निवेदयन्ती

क्षीणाऽसि पापहृदये! न सखीजनेऽस्मिन्?॥

---

इत्यनादराच्यायान्वयोऽर्हमिति भावः; एवमुत्तरत्र विरुद्धधर्मसमावेशोऽप्युह्यः, अयमहश्चैव स्पष्ट एव, सौन्दर्यगुणकीर्तनरूपा सा श्लाघा, एष च सखीजनस्य प्रकाश्यमानः, विनयव्युत्क्रमे विनयस्य सुचरितस्य, पातिव्रत्यस्य, व्युत्क्रमे व्यतिक्रमस्य, रागः अनुरागः, रागो हि गुणमूलक एव, तथा च गुणाधिक्यदर्शनात् परपुरुषे राग इति मम गुणश्लाघाविरुद्धमिति भावः; अङ्गमतो यथार्थभावबोधाक्षमे, भाव विषये समीपे वा, तत् चौदार्यं सरलस्वभावः, कापट्यरहितचरितमिति यावत्, प्रकाशितमित्यर्थः, चापले कापट्ये, सा वञ्चयित्वा परपुरुषानुसरणे, कोऽपि यस्याः उपायः, तथा च कापट्याकापट्ययोर्विरुद्धता, वितमसि दोषरहिते, तथात्वेन ख्याते कुले वंशे, जन्म, एतदन्ताद्दृशं, कौलीनमपवादः, तद्धेतुभूतासच्चेष्टादिकमुपचारात्, तथा च सुवंशजन्मनो विरुद्धमेतदिति भावः। "कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः" इति कोषः। मन्दाक्रान्ता वृत्तम्।

(१) श्लीलमहंतीति श्लीला लज्जावती, अश्लीलत्वं निर्लज्जता। दुःशीलत्वमिति पाठे—दुश्चरितमित्यर्थः।

(२) यस्मिन् सखीजने, चिरं प्रणयेन स्नेहेन, निर्भरं अतिशयं यथा तथा, बद्धः निश्चयरहित्याद्धैः कृतबन्धनः, भावोऽनुरागो यस्मिन् तद्यथा तथा, आवेदितः

---

(क) ततस्ततः ?।

(ख) ततोऽहं त्वरितमासनस्थानमेतत् लतामण्डपं प्रविष्टा, सोऽपि मामनुसरन्नेव लतामण्डपं प्रविष्टः। आसनस्थानं वासस्थानम्।

उभे। तदो तदो ?। (क)

भानु। तदो तेण सप्पगब्भं [ * ] पसारिअकरेण अवहरिअं मे त्थणंसुअं। (ख)

राजा। [ सक्रोधम् ]। अलमिदानीमतः परमाकर्णनेन, भवतु तावत्, तस्य परवनिताऽऽस्कन्दनप्रगल्भस्य (१) माद्रीसुतहतकस्य जीवितमपहरामि। [ किञ्चिद्गत्वा विचिन्त्य ]। अथवा इयमेव तावत् पापशीला प्रथममनुशासनीया। [ इति निवर्त्तते ]।

उभे। तदो तदो ?।

भानु। तदो अहं अज्जउत्तस्स पभादमंगलतूररवमिस्सेण वारविलासिणीमंगलगीदसद्देण पडिबोधिदम्हि। (ग)

राजा। [ सवितर्कम् ]। किं नाम खलु प्रतिबोधिताऽस्मीति !! किम् खलु स्वप्नदर्शनमनया वर्णितम् ?। [ विचिन्त्य ]। भवतु, सखीवचनात् व्यक्तिर्भविष्यति।

उभे। [ सविषादमन्योऽन्यं पश्यतः ]।

सुवदना। जं किं वि अच्चाहिदं तं भाइरहीप्पमुहाणं

क्षिप्तः; तवैव नवीनजने, दुश्चरितं पापाचरणं, व्यभिचाररूपं, कथयितुं न क्षमा-ऽसि ? इत्यन्वयः। पाप पापान्वितं, हृदयं यस्याः तत्सम्बुद्धौ। वसन्ततिलकं वृत्तम्।

(१) परवनितायाः परस्त्रियाः, आस्कन्दनेन अपहरणेन, प्रगल्भस्य धृष्टस्य।

(क) ततस्ततः ?।

(ख) ततस्तेन सप्रगल्भं प्रसारितकरेण अपहृतं मे स्तनांशुकम्।

(ग) ततोऽहमार्य्यपुत्रस्य प्रभातमङ्गलतूर्य्यरवमिश्रेण वारविलासिनीमङ्गलगीतशब्देन प्रतिबोधिताऽस्मि। "आर्य्यपुत्रेति वक्तव्यः पतिः नवीनजनेन तु" इति भरतोक्तेः आर्य्यपुत्रस्य स्वामिन इत्यर्थः।

* सप्पगब्भं इत्यत्र सगव्वं इति पाठे—सगर्वम्।

अदूणं सलिलेण अवहारीअदु, भअवदाणं बह्मणाणं वि आसी-
साए, आहुदिहुदेण पज्जलिदेण भअवदा हुदासणेण अ अंतरी-
अदु। (क)

राजा। अलं विकल्पेन, स्वप्नदर्शनमेवैतदनया वर्णितं, मया पुनर्मन्दधियाऽन्यथैव सम्भावितम्।

(१) दिष्ट्याऽर्द्धश्रुतविप्रलम्भजनितक्रोधादहं नो गतो
दिष्ट्या नो परुषं रुषाऽर्द्धकथने किञ्चिन्मया व्याहृतम्।
मां प्रत्याययितुं विमूढहृदयं दिष्ट्या कथान्तं गता
मिथ्यादूषितयाऽनया विरहितं दिष्ट्या न जातं जगत्॥

भानु। हला! कहेहि किं एत्थ सुहसूअअं?। (ख)

उभे। [अन्योऽन्यमवलोक्य अपवार्य]। एत्थ णत्थि त्थोअं वि सुहसूअअं। जइ एत्थ अणोअं कहइस्सं ता अवराहिणी भविस्सं (२)। सो एव्व णिगिणो जणो जो पुच्छिदो परुसं वि हिदं भणादि। [प्रकाशम्]। सहि! सव्वं एव्व

(१) अर्द्धे यथा तथा श्रुतः विप्रलम्भः विसंवादः, तत्सूचकवाक्यमित्यर्थः, तज्जनित-क्रोधात् तज्जन्यकोपात्। प्रत्याययितुं विश्वासं कारयितुम्। कथायाः अभीष्टार्थकवाक्यस्य, अन्तं समाप्तिं, गता वाक्यं समापयामासेत्यर्थः। मिथ्यादूषितया व्यभिचारित्व-भ्रमेण सम्भावितदूषणया। विरहितमित्यनेन मया व्यापादितयेत्यर्थात् गम्यते। दिष्ट्येति हर्षसूचनार्थं भाग्यहेतुकत्वोत्कीर्तनम्। शार्दूलविक्रीडितं वृत्तम्।

(२) "अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः" इत्युक्तेः सुहृदा हितं परुषमपि वाच्यमिति नियमे स्थिते निवर्तितकथनरूपदोषरूपापराधवती भविष्यामीत्यर्थः।

(क) यत् किमप्यत्याहितं तद्भागीरथीप्रमुखाणां नदीनां सलिलेनापक्रियताम्, भगवतां ब्राह्मणानामपि आशिषा, आहुतिहुतेन प्रज्वलितेन भगवता हुताशनेन च अन्तर्धीयताम्। अत्याहितमशुभम्।

(ख) हला! कथय किमत्र शुभसूचकम्?।

एत्थ असुहणिवेदअं, ता देवदाणं पणामेण दुव्वादिपडिग्गहेण अ अंतरीअदु ; ण हु दंट्ठिणो णउलस्स अस्सस्स वा दंसणं अहिसदवहं वि सिविणए पसंसंति विअक्खणा । (क)

राजा । अवितथमाह सुवदना, नकुलेन पन्नगशतवधः स्तनांशुकाहरणञ्च नियतमरिष्टोदर्कम् (१) अस्माकं तर्कयामि ।

(२) पर्य्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः ।
शतसङ्ख्या पुनरियं सानुजं स्पृशतीव माम् ॥

[ वामाक्षिस्पन्दनं (३) सूचयित्वा ] । आः ! कथं ममापि

---

(१) अरिष्टमुदर्कं उत्तरकाले यस्य तत् अरिष्टफलकमित्यर्थः ।

(२) "अकामानुमतौ कामम्" इति कोषात् शुभा वा अशुभा वा स्वप्नाः दृश्यन्ते इत्यकामेनाप्यनुमन्तव्यमित्यर्थः ; अथवा कामं यथेष्टमित्यर्थः, पर्य्यायेण क्रमेण, कदाचित् शुभाः कदाचित् च अशुभा इत्यनेन क्रमेणेत्यर्थः । प्रायेणैवेति पाठः दर्पणधृतः । इयं हन्यमानाहीनां शतसङ्ख्या तत्सङ्ख्यकत्वा, अहीनामिव अस्माकमपि शतसङ्ख्यावत्त्वादित्यर्थः । स्पृशति विषयीकरोति । अत्र तर्काख्यं नाटकाङ्गं, यथोक्तं दर्पणे, "तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना" इति । पथ्यावक्त्रं वृत्तम् ।

(३) वामाक्षिस्पन्दनं हि पुंसां अतिकरं निमित्तं प्रसिद्धम् ।

---

(क) अत्र नास्ति स्तोकमपि शुभसूचकम् । यद्यहमात्मीयं कथयिष्यामि तदाऽपराधिनी भविष्यामि । स एव स्निग्धो जनः यः पृष्टः परुषमपि हितं भणति । सखि ! सर्वमेवाशुभनिवेदकं, तद्देवतानां प्रणामेन दूर्वादिपरिग्रहेण चान्तर्य्यताम् ; न तु दंष्ट्रिणो नकुलस्यान्यस्य वा दर्शनमहिशतवधमपि स्वप्ने प्रशंसन्ति विचक्षणाः । अन्तरशब्दात् णिचि कर्मणि रूपम् । अन्तर व्यवहित क्रियताम् अन्तर्य्यताम् अन्तरितं क्रियतामित्यर्थः । दूर्वाद्योषधिपरिग्रहस्याप्यमङ्गलनाशकत्व स्मृत्युक्तं बोध्यम । दुग्गादिपडिग्गहेणेति पाठे—दुर्गातिसम्प्रदानकप्रतिग्रहेणेत्यर्थः । इह आशीरलङ्कारः, "आशीरिष्टाभ्यप्रार्थनम्" इति भरतवाक्यात् ।

नाम दुर्योधनस्यानिमित्तानि (१) हृदयक्षोभमावेदयन्ति !! [ सावष्टम्भम् ]। अथवा भीरुजनहृदयकम्पनेषु का गणना दुर्योधनस्यैवंविधेषु ? [*]। गीतश्चायमर्थोऽङ्गिरसा।

(२) ग्रहाणां चरितं स्वप्नोऽनिमित्तोत्पादकं तथा।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥

तद्भानुमत्याः स्त्रीस्वभावसुलभामलीकाशङ्कामपनयामि।

भानु। हला सुवअणे ! पेक्ख, उदअगिरिसिहरंतरविमुक्करहवरविअलिअसंझाराअप्पसण्णदरालोअमंडलो जादो भअवं दिवहणाहो। (क)

सखी। भट्टिणि ! रोसासिणकसक्कंति [ † सस्सिरीएण ] सदाजालंतरोवाहिदकिरणजालेण [ ‡ पिसगोकदो ] ज्जाण-

(१) अनिमित्तानि उत्पातादिरिष्टसूचकनिमित्तानि।

(२) ग्रहाणां रव्यादीनां, चरितं गतिभेदः, राश्यन्तरसञ्चारादिः रिष्टसूचकदशा-श्चाकादिकालसूचकगतिभेदश्च, स्वप्नो दुर्निमित्तदर्शनेनाशुभसूचकः, अनिमित्तस्य दुष्ट-निमित्तस्य, उत्पादकं सूचकं भूमिकम्पोल्कापातादि, एतानि काकतालीयं काक-गमनकालिकतालपतनमिव, अतर्कितोपनतमित्यर्थः, फलन्ति फलसाधनाय कल्पन्ते, तेभ्यः प्राज्ञाः कृतधियः, न बिभ्यतीत्यन्वयः। पथ्यावक्त्रं वृत्तम्।

(क) हला सुवदने! पश्य, उदयगिरिशिखरान्तरविमुक्तरथवरविदलितसन्ध्या-रागप्रसन्नतरालोकमण्डलो जातो भगवान् दिवसनाथः।

* [ कश्मलेषु ] इत्यधिकः पाठः।

† [ सस्सिरीएण ] सश्रीकेण इत्यर्थः।

‡ [ पिंजरिदो ] इति क.ख.ग पाठः। पिञ्जरितः।

भूमिभाओ [*] दुप्पेक्खणिज्जो भअवं सहस्सरस्सि संवुत्तो, ता समओ दे लोहिदचन्दणकुसुमगब्भेण अग्घेण पज्जुवट्ठादुम्। (क)

भानु। हञ्जे तरलिए! उवणेहि मे अग्घभाअणं, जाव भअवदो सहस्सकिरणस्स सवरिअं णिव्वट्टेमि। (ख)

चेटी। जं देवी आणवेदि। [इति निष्क्रम्य पुनः प्रविश्य]। भट्टिणि। एदं अग्घभाअणं, णिव्वट्टेदु भअवदो सहस्सरस्सिणो सवरिअम्। (ग)

राजा। अयमेव साधुतरोऽवसरः प्रियासमीपमुपगन्तुम्। [इत्युपसर्पति]।

सखी। [विलोक्यात्मगतम्]। कहं महाराओ आअदो !! हन्त। जादो से णिअमभङ्गो। (घ) (१)

भानु। [दिनकराभिमुखीभूय]। भअवं! अवर-

---

(१) अधीरेण राज्ञा नियमस्याऽपि सङ्गमादिना दूषयिष्यते इति भावः।

---

(क) भट्टिनि। रोषान्वितकर्णकान्तिसमीकेण लतालतान्तरोपरिचरितकिरणजालेन पिञ्जरीकृतोद्यानभूमिभागो दुष्प्रेक्षणीयो भगवान् सहस्ररश्मिः संवृत्तः, तत् समयस्ते लोहितचन्दनकुसुमगर्भेणार्घेण पर्य्युपस्थातुम्।

(ख) हञ्जे तरलिके। उपनय मे अर्घभाजनं, यावद्भगवतः सहस्रकिरणस्य सपर्य्यां निर्वर्त्तयामि।

(ग) यद्देवी आज्ञापयति। भर्त्तृनि! इदमर्घभाजनं, निर्वर्त्तय भगवतः सहस्ररश्मेः सपर्य्याम्।

(घ) कथं महाराज आगतः !! हन्त। जातोऽस्या नियमभङ्गः।

---

* [पूरिदपदिसा दिअविस] इत्यधिकः क्वचित् पाठः।
पूरितप्रान्तो दिगुपरिव।

महासरेक्कसहस्सपत्त! (१) पुव्वदिसावहुमुहमंडणकुंकुम-विसेसअ! सअलभुवणेक्करअणप्पदीव! जं एत्थ सिविणअदंसणे किं वि अच्चाहिदं, तं भअवदो पणामेण सभादुअस्स अज्जउत्तस्स कुसलपरिणामो होदु। [ अर्घं दत्त्वा ]। हंजे तरलिए! उवणेहि मे कुसुमाइं, अवराणं वि देवदाणं सवरिअं णिव्वट्टिदुं। (क) [ इति हस्तौ प्रसारयति ]।

[ राजा संज्ञया परिजनमुत्सार्य्य पुष्पाणि स्वयमुपनयति, स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति च ]।

भानु। [ सरोषम् ]। अहो! पमादो परिअणस्स। (ख) [ परिवृत्य राजानमवलोक्य ससाध्वसं लज्जां नाटयति ]।

राजा। देवि! अनिपुणः परिजनोऽयमेवंविधसेवाऽवकाशे, तत् प्रभवति अनुशासने (२) देवी। अयि प्रिये!

(३) विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः<br>
परिजनपथवर्त्तिन्यत्र किं सम्भ्रमेण?।<br>
स्मितमधुरमुदारं देवि! मामालपोच्चैः<br>
प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम्॥

---

(१) अम्बरमहासर-एकसहस्रपत्र। अम्बरमाकाशमेव, महत् सरः सरोवरं, तस्य एकमद्वितीयं मुख्यं वा, यत् सहस्रपत्रं पद्मं तत्सम्बुद्धौ।

(२) अनुशासने आज्ञाप्रदाने।

(३) नियमस्थतया कज्जलशून्यत्वेन धवलापाङ्गत्वं चक्षुषः। स्मितमधुरं यथा

(क) भगवन्! अम्बरमहासर-एकसहस्रपत्र! पूर्वदिग्वधूमुखमण्डनकुङ्कुम-विशेषक! सकलभुवनैकरत्नप्रदीप! यदत्र स्वप्नदर्शने किमप्यत्याहितं, तद्भगवतः प्रणामेन सभ्रातृकस्यार्य्यपुत्रस्य कुशलपरिणामि भवतु। हञ्जे तरलिके! उपनय मे कुसुमानि, अपरासामपि देवतानां सपर्य्यां निर्वर्त्तयितुम्। विशेषक-तिलकम्। अत्याहितमरिष्टम्।

(ख) अहो! प्रमादः परिजनस्य।

भानु। अब्भणुजाणादु मं महाराओ, अत्थि मे कस्सिं वि णिअमे अहिलासो। (क)

राजा। श्रुतविस्तार एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति, तदलं प्रकृतिसुकुमारमात्मानं खेदयितुम्।

भानु। अज्जउत्त! अदिमेत्तं मे संका बाहेइ, ता अणुमण्णदु मं अज्जउत्तो। (ख)

राजा। [ सगर्वम् ]। अलमनया शङ्कया। पश्य—

(१) किन्नो व्यासदिशां प्रकम्पितभुवामक्षौहिणीनां फलम्?
किं द्रोणेन? किमङ्गराजविशिखैरेवं यदि क्राम्यसि?।
भीरु! भ्रातृशतस्य मे भुजवनच्छायासुखोपास्थिता
त्वं दुर्य्योधनकेशरीन्द्रगृहिणी शङ्काऽऽस्पदं किन्तव?॥

भानु। अज्जउत्त! ण हि किं वि मे संकाकालणं तुह्मेसु सण्णिहिदेसु, किस्सु अज्जउत्तस्स एव्व मणोरहसंपत्तिं अहिणंदामि। (ग)

---

स्वात्मना, उदारम् औदार्य्यान्वितं, माम् आलप। अयं मम पाण्योरञ्जलिः अञ्जल्याकारौ पाणी, त्वा सेवितुं प्रभवति अपराधिनोऽञ्जलिबन्धनमेवोचितमिति तथा करोमीति भावः। मालिनी वृत्तम्।

(१) भुजा एव वनं तस्य छायाया सुखेनोपास्थिता, भुजानां वनत्वारोपेणास्त्रं विनाऽपि तेषां शत्रुविजयादिना सौख्यकारित्वमिति सूचितम्। शार्दूलविक्रीडितं वृत्तम्।

---

(क) अभ्यनुजानातु मां महाराजः, अस्ति मे कस्मिन्नपि नियमेऽभिलाषः।

(ख) आर्य्यपुत्र! अतिमात्रं मां शङ्का बाधते, तदनुमन्यतां माम् आर्य्यपुत्रः।

(ग) आर्य्यपुत्र! न हि किमपि मे शङ्काकारणं युष्मासु सन्निहितेषु, किन्तु आर्य्यपुत्रस्यैव मनोरथसम्पत्तिमभिनन्दामि।

राजा। अयि सुन्दरि! एतावन्त एव मनोरथाः यदहं वनितया सङ्गतः स्वेच्छया विहरामीति। पश्य—

(१) प्रेमाबन्धस्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथं मन्दमन्दस्मितं वा।
वक्त्रेन्दुं ते नियममुषितालक्तकाङ्काधरं वा
पातुं वाञ्छाऽपरमसुलभं किन्नु दुर्योधनस्य?॥

नेपथ्ये। [ महान् कलकलः। सर्वे आकर्णयन्ति ]।

भानु। [ राजानं परिष्वज्य ]। परित्ताअदु परित्ताअदु अज्जउत्तो। (क)

राजा। [ समन्तादवलोक्य ]। प्रिये! अलं सम्भ्रमेण। पश्य—

(२) दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांशुदण्डोऽन्तरीक्षे
झङ्कारी शर्कराल: पथिषु विटपिनां स्कन्धकाषैः सधूमः।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीरः
चण्डारम्भः समीरो वहति परिदिशं भीरु! किं सम्भ्रमेण?॥

(१) प्रेमाबन्धेन रत्यावेशेन, स्तिमितम् ईषन्मीलितं, यन्नयनं तेन आपीयमाना विभिता, अब्जशोभा येन। नियमेन व्रतभेदेन, मुषितः अपहृतः, अलक्तकाङ्कः यावकचिह्नं, यस्य तादृशोऽधरो यस्य तथाविधं, वक्त्रेन्दुं वक्त्रमिन्दुमिव मुखचन्द्रम्, असुलभं व्रतस्थतया दुष्प्राप, पातुं वाञ्छा, नु भो.। किम् अपरम्? तद्भिन्नं किमपि मम न वाञ्छनीयमित्यर्थः। मन्दाक्रान्ता वृत्तम्।

(२) दिक्षु व्यूढानि विचित्राणि, अङ्घ्रिपाणां वृक्षाणाम्, अङ्गानि शाखादीनि येन सः, अन्तरीक्षे तृणेन जटिलः जटाकारताप्राप्तत्वेन व्याप्तः, चलन् ऊर्द्ध्वं गच्छन्, पांशुदण्डः पांशुदण्ड इव दण्डाकारपांशुसमूहो यस्मात् तादृशः। शर्करालः शर्करा "खापरा" इति प्रसिद्धं तद्वान्। विटपिनां स्कन्धकाषैः स्कन्धस्य घर्षणैः, तत्सम्पर्कात् सधूमः धूमसहित इव। अभिनवो जलदो मेघ., तस्य उद्गारो ध्वनिरिव,

(क) परित्रायतां परित्रायतामार्यपुत्रः।

सखी । महाराअ ! पविसदु एदं दारुपव्वअप्पासादं, उव्वेअ-आरी क्खु अअं उट्ठिदो परुसरअक्कलुसीकिदणअणो, विदलिद-तरुवर-सहविसत्थ-मंदुरापरिब्भट्टवल्लहतुरंगमो पज्जाउली-किदजणपद्धई भीसणो समीरणासारो । (क)

राजा । उपकारि खल्विदं वात्याचक्रं सुयोधनस्य, यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या सम्पादितोऽस्मन्मनोरथः । कथमिति ।

(१) न्यस्ता न भ्रुकुटिर्न बाष्पसलिलैराच्छादिते लोचने
नीतं नाननमन्यतः शपथं नाहं स्पृशन् वारितः ।
तन्व्या लग्नपयोधरं भयवशादाबद्धमालिङ्गितं
भङ्क्ताऽस्या नियमस्य भीषणमरुन्नायं वयस्यो नु मे ॥

---

गम्भीरो घोरश्च, चण्ड प्रचण्डः, आरम्भो वेगो यस्य एतादृशः, वायुः परितः प्रतिदिशं वहतीति, वातोत्पातस्य सार्वत्रिकत्वात् सम्भ्रमो न कर्त्तव्य इत्यर्थः । स्रग्धरा वृत्तम् ।

(१) अयं भीषणमरुत्, किन्तु मम वयस्य इति नु उत्प्रेक्षे, बाधयाऽऽत्मन उपकारकरणात्तस्य वयस्यत्वमुत्प्रेक्ष्य इति भावः, तत्कृतमुपकारं दर्शयति, न्यस्तेत्यादि ।—नियमकाले बलादालिङ्गने भ्रुकुटिनयनाश्रुपातादिकं क्रियते, तत्र बाधाभयेन स्वयमेव कृतमित्याशयः, अक्षरार्थस्तु—भ्रुकुटिः न न्यस्ता, अनभिमत-करणे भ्रुकौटिल्यं स्त्रीणां स्वभावसिद्धं, तन्न कृतं, नापि चक्षुषी अश्रुभिराच्छादिते, इदमपि स्त्रीणां स्वाभाविकं यदनभिमतकरणे किञ्चिदक्षमसामर्थ्ये अश्रुजल-प्लावनेन लोचने आच्छाद्येते, नापि अन्यतः अन्यत्र, आननं नीतं पराङ्मुखं स्थापितं, नापि स्पृशन्नहं "त्वया नाहं स्पर्शनीया" इति शपथं दत्त्वा निवारितः, इदमपि

---

(क) महाराज । प्रविशत्विमं दारुपर्वतप्रासादम्, उद्वेगकारी खल्वयमुत्थितः परुषरजःकलुषीकृतनयनः, विदलिततरुवरशाखाविश्वस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमः, पर्याकुलीकृतजनपद्धतिः, भीषणः समीरणासारः । दारुपर्वतः आक्रीडपर्वतः । समीरणः आसारो वृष्टिवेग इव वातसमूह इत्यर्थः ।

तत् सम्पूर्णमनोरथस्य मे कामचारः (१) सम्प्रति विहारेषु, तदितो दारुपर्वतमेव गच्छामः ।

[ सर्वे वात्यावाधां रूपयन्तो यवतः परिक्रामन्ति ] ।

राजा । (२) कुरु घनोरु ! पदानि शनैः शनैः

अयि ! विमुञ्च गतिं परिवेपिनीम् ।
सुतनु ! बाहुलतोपनिबन्धनं
मम निपीड़य गाढ़मुरःस्थलम् ॥

[ प्रवेशं रूपयित्वा ] । प्रिये ! अलब्धावकाशः समीरणः संवृतत्वात् गर्भगृहस्य, विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम् (३) ।

भानु । [ सहर्षम् ] । दिट्ठिआ उप्पादसमीरणासारो ण बाधेइ । (क)

सखी । महाराअ ! आरोहणसंभमणिस्सहं पिअसहीए ऊरुजुअलं, ता कीस दाणीं महाराओ आसणवेदीं ण अणुभूसेदि ? । (ख)

सासा स्वाभाविकमेव, स्वकृतालिङ्गनादौ प्रतिबन्धाभावमुक्ता तथैव तत् स्वयं कृतमित्याह, भयवशात् लग्नपयोधरं सम्बद्धस्तनं यथा तथा, आलिङ्गितुमारब्धम्, अनेन तदानीमलभ्य तदालिङ्गनं सम्पादयतो वायोरुपकारितेति सूचितम्, अस्याः भानुमत्याः, नियमस्य व्रतस्य, भङ्क्ता नाशयिता । शार्दूलविक्रीडितं वृत्तम् ।

(१) स्वेच्छाचारः ।

(२) घनोरु । हे निबिडोरु । शनैः शनैः पदानि कुरु । बाहुलतैव तया उपनिबन्धनं बन्धनं यत्र तद्यथा तथा, उरःस्थलं गाढं निपीड्य आलिङ्गेत्यर्थः । द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणात् ।

(३) गर्भगृहस्य मध्यगृहस्य, संवृतत्वात् भित्त्यादिनाऽऽवृतत्वात, समीरणः

(क) दिष्ट्या उत्पातसमीरणासारो न बाधते ।

(ख) महाराज ! आरोहणसम्भ्रमनिःसहं प्रियसख्या ऊरुयुगलं, तत् कस्मात् इदानीं महाराज आसनवेदीं नानुभूषयति ? ।

राजा। [ देवीमवलोक्य ]। भवति! अनल्पमेवापकृतं वात्यासम्भ्रमेण। तथा हि—

(१) रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वात्
उत्कम्पोऽल्पोऽपि पीनस्तनभरितमुरः क्षिप्तहारं दुनोति।
ऊर्वोर्मन्देऽपि याते पृथुजघनभरात् वेपथुर्वर्द्धितेऽस्या
वात्या खेदं कृशाङ्ग्याः सुचिरमवयवैर्दत्तहस्ता करोति॥

[ सर्वे उपविशन्ति ]।

राजा। तत् किमित्यनास्तीर्णं कठिनशिलातलमध्यास्ते देवी?। यतः,—

(२) लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य।
अध्यासितुं तव चिरं जघनस्थलस्य
पर्य्याप्तमेव करभोरु! ममोरुयुग्मम्॥

[ प्रविश्य पटाक्षेपेण सम्भ्रान्तः कञ्चुकी ]। देव! भग्नं भग्नम्। [ सर्वे सातङ्कं पश्यन्ति ]।

---

अनवस्थावकाशः अप्राप्तप्रवेशः। उन्मृष्टः प्रोञ्छित, रेणुनिकरो धूलिसमूहो यस्मात् तादृश, चक्षुरुन्मीलय।

(१) मन्दे स्वल्पेऽपि, याते गमने सति, बहुगमनाभावेऽपीत्यर्थः। दत्तहस्ता कृतावलम्बना, दत्तसाहाय्येति यावत्, वात्या वातसमूहः, खेदं सुचिरं बहुकाल, करोति। स्रग्धरा वृत्तम।

(२) हे करभोरु। ममोरुयुग्ममेव तव जघनस्थलस्य अध्यासितु पर्य्याप्त समर्थ, तत् किमन्याध्यासनेन? इति भावः। इह छलनामा सन्धिः, यथोक्तं भरतेन, "इष्टार्थयुक्तं यद्वाक्य भाष्यतेऽन्यमनीषया। वाक्यान्तरेण संयोगात् छलनामाऽभिधीयते॥" इति। इह राज्ञोरुयुग्म भानुमत्या जघनस्थलाध्यासनपर्य्याप्ततया प्रक्रान्त, तस्य भग्न भग्नमित्यनेन सम्बन्धः, तेन भावितद्भङ्गसूचनाप्रत्वेन शङ्कितमित्यन्यपरतयाऽस्य छलत्वम्। वसन्ततिलकं वृत्तम्।

राजा। केन?

कञ्चु। देव! भीमेन। [ * ]

राजा। आः! किं प्रलपसि?।

भानु। अज्ज! किं अणत्थं मंतेसि?। (क)

कञ्चु। [ सभयम् ]। देव! कथयामि सर्वम्।

(१) भग्नं भीमेन भवतो मरुता रथकेतनम्।
पतितं किङ्किणीक्काणबद्धाक्रन्दमिव क्षितौ॥

राजा। यदि बलवत्समीरणवेगात् कम्पिते भुवने भग्नः स्यन्दनकेतुः, तत् किमित्युद्धतं प्रलपसि भग्नं भग्नमिति?।

कञ्चु। देव! न किञ्चित्, किन्तु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति।

भानु। अज्जउत्त! पडिहरीअदु एदम् अणिमित्तं पसस्स-बम्हणवेआणुघोसेण होमेण अ। (ख)

राजा। [ सावज्ञम् ]। ननु! गच्छ, पुरोहितसुमित्राय निवेदय।

कञ्चु। यदाज्ञापयति देवः। [ इति निष्क्रान्तः ]।

(१) भीमेन भीषणेन। किङ्किणीक्काणेन क्षुद्रघण्टिकाशब्देन, आबद्धः कृतः, आक्रन्दः क्रन्दनं येन तथाभूतमिव, भूमौ पतितम्। पथ्यावक्त्रं वृत्तम्।

(क) आर्य्ये! किमनर्थं मन्त्रयसि?।

(ख) आर्य्यपुत्र! परिह्रियतामेतदनिमित्तं प्रशस्तब्राह्मणवेदानुघोषेण होमेन च।

* [ राजा। कस्य? ]।
[ कञ्चु। भवतः ]। इत्यधिकः पाठः दर्पणे धृतः।

[ प्रविश्य प्रतीहारी सोद्वेगमुपसृत्य ]। जअदु जअदु महाराओ। महाराअ! एसा क्खु जामादुणो सिंधुराअस्स मादा दुस्सला अ पड़िहारभूमीए चिट्ठदि। (क)

राजा। [ स्वगतम् ]। किं जयद्रथमाता दुःशला चेति !! कच्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न कश्चिदत्याहितमाचेष्टितं भवेत्?। [ प्रकाशम् ]। गच्छ, प्रवेशय शीघ्रम्।

प्रती। जं महाराओ आणवेदि (ख)। [ इति निष्क्रान्ता ]।

[ ततः प्रविशति सम्भ्रान्ता जयद्रथमाता दुःशला च ]।

उभे। [ सास्रं दुर्य्योधनस्य पादयोः पततः ]।

माता। पड़ित्ताअदु पड़ित्ताअदु कुलणाहो। (ग)

दुःशला। [ रोदिति ]।

राजा। [ ससम्भ्रममुत्थाप्य ]। अम्ब! समाश्वसिहि समाश्वसिहि। किमत्याहितम्? अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य?।

माता। जाद! कुदो कुसलम्। (घ)

राजा। कथमिव?।

माता। [ साशङ्कम् ]। अज्ज क्खु पुत्तवहामरिसुद्दीविदेण गंडीविणा अणत्थमिदे दिवहणाहे तस्स वहो पड़िस्सादो। ( ङ )

---

(क) जयतु जयतु महाराजः। महाराज! एषा खलु जामातुः सिन्धुराजस्य (जयद्रथस्य) माता दुःशला च प्रतीहारभूमौ (द्वारे) तिष्ठतः। दुःशला दुर्य्योधनस्य स्वसा।

(ख) यत् महाराज आज्ञापयति।

(ग) परित्रायतां परित्रायतां कुरुनाथः।

(घ) जात! कुतः कुशलम्। पुत्रस्थानीयानां जात इति सम्बोधनम्।

(ङ) अद्य खलु पुत्रवधामर्षोद्दीपितेन गाण्डीविना अनस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः। अस्तमिति मान्तमव्ययम्।

राजा। सस्मितम्। इदं तदसत्कारणमम्बाया दुःशलायाश्च। पुत्रशोकादुत्तमस्य किरीटिनः प्रलपितैरेवमवस्था; अहो! मुग्धत्वमबलानाम्। कृतं विषादेन। वत्से! दुःशले! अलमश्रुपातेन। कुतश्चायमस्य धनञ्जयस्य प्रभावो दुर्य्योधनबाहुपरिघ(१)रक्षितस्य महारथ(२)जयद्रथस्य विपत्तिमुत्पादयितुम्!!।

माता। जाद! जदोश्र बंधुवहामरिसुद्दीविदकोवाणला अणपेक्खिदसरीरा वीरा पलिक्कमन्ति (क)।

राजा। [सोपहासम्]। एवमेतत्, सर्वजनप्रसिद्धमेवामर्षित्वं पाण्डवानाम्। पश्य—

(३) हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रसमितौ गौर्गौरिति व्याहृता।
तस्मिन्नेव स किन्नु गाण्डिवधरो नासीत् पृथानन्दनः?
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत्?॥

(१) बाहुः परिघ इव। परिघोऽस्त्रभेदः, सर्वार्थसाधनत्वाद्बाहोः परिघत्वम्।

(२) "एको दशसहस्राणि यो योधयति धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः॥" इत्युक्तलक्षणः, तेन स्वत एव न तस्य विपत्तिः, किमुत मद्रक्षितस्य? इति भावः।

(३) ममाज्ञया दुःशासनेन कर्त्रा हस्तेनाकृष्टं विलोलं केशो वसनं च यस्याः तथाभूता पाञ्चाली सर्वराजसभायामेव, न त्वेकान्ते, गौर्गौरिति पशुत्वात् अहं गोसदृशीत्येवं, द्विरुक्तिः सम्भ्रमातिशयद्योतनार्था, व्याहृता व्याहारिता, अन्तर्भूतण्यर्थः, राजवधूनां गौर्गौरित्यभिधानमतीवापमानसूचकमिति समाचार। तस्मिन्नेव समये विषये वा, एषः स्वचक्षुषैव तद्दृष्ट्वा पृथानन्दनोऽर्जुनः, किं नु किमिति, गाण्डिवधरो नासीत? न जातः? अपमानकार्य तदेतत् तस्य किं

(क) जात! यतश्च बन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः पराक्रामन्ति।

माता। असमत्तपड़िण्णाभरेण आप्पवहो तेण पड़िण्णादो। (क)

राजा। यद्येवम्, अलमानन्दस्थानेऽपि ते विषादेन; ननु ! वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति। मातः ! का शक्तिरस्ति धनञ्जयस्य अन्यस्य वा कुरुशतपरिवारवर्द्धितमहिम्नः कृपकर्ण-द्रोणाश्वत्थामादिमहारथद्विगुणीकृतनिरावरण (१) विक्रमस्य नामापि ग्रहीतुं ते तनयस्य ? अयि सुतपराक्रमानभिज्ञे !

(२) धर्मात्मजं प्रति यमौ च कथैव नास्ति<br>
मध्ये वृकोदरकिरीटभृतोर्बलेन।<br>
एकोऽपि विस्फुरितमण्डलचापचक्रं<br>
कः सिन्धुराजमभिषेणयितुं समर्थः ? ॥

भानु। अज्जउत्त ! जइवि एव्व, तहवि गुरुकिदपडिण्णाभारो धणंजओ त्ति इत्थीणं क्खु संकाए। (ख)

---

कोपस्थानं न ? व्यक्तिमात्रस्य तस्य कोपस्थानत्वं, विशेषतो यूनस्तरुणस्य, तदवस्थायां क्रोधस्य स्वाभाविकत्वात्, तत्रापि क्षत्रियवंशजन्मातिशयेन स्वाभाविकक्रोधवत्त्वं, तत्रापि च कृतिनः कृतकार्य्यस्य, क्रोधातिशयवत्त्वं भवत्येव, तत्र यद्यस्यामर्षित्वं न, तदा कदाऽस्यामर्षित्वम् ? इत्यमर्षित्वाभावः प्रसिद्धतया यदाक्षिप्तः तदसामर्थ्यमिति भावः। शार्दूलविक्रीडितं वृत्तम्।

(१) निरावरणः प्रसरणप्रतीघातरहितः, स्वभावतस्तस्य निरावरणत्वं पुनर्द्रोणादिभिर्द्विगुणीकृतत्वान्न धनञ्जयस्य तदाभवने शक्तिरिति भावः।

(२) युधिष्ठिर यमौ च प्रति कथा जयद्रथेन सह युद्धस्य प्रसक्तिः, नास्ति, भीमार्जुनयोर्मध्ये कः एकः बलेन विस्फुरित मण्डलाकार धनुश्चक्रं येन तादृशः, सिन्धुराजमभिषेणयितुम् आभिमुख्येन योद्धुं, समर्थः ? न कोऽपीत्यर्थः। वसन्ततिलकं वृत्तम्।

---

(क) असमाप्तप्रतिज्ञाभरेणात्मवधस्तेन प्रतिज्ञातः।

(ख) आर्य्यपुत्र ! यद्यपि एव, तथाऽपि गुरुकृतप्रतिज्ञाभरो धनञ्जय इति स्त्रीणां खलु शङ्कायाः।

माता । जादे ! साहु, कालोइदं तुए मंतिदं । (क)

राजा । आः !! ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः !! पश्य—

(१) कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः
श्लिष्टान्योऽन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः ।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां चमूनाम्
आक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः सम्पतन्ति ॥

अयि भानुमति ! विज्ञातपाण्डवप्रभावे ! (२) किं त्वमपि एवमाशंससे ? । पश्य—

(३) दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्द्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥

कः कोऽत्र भोः ! जैत्रं (४) मे रथमुपपादय तावत्, याव-

---

(१) कोदण्डस्य चापस्य, ज्यायाः किणः घर्षणजातः "घाँटा" इति प्रसिद्धः, अङ्को येषां तैः, कङ्कटेन सन्नाहेन, उन्मुक्तः त्यक्तः, देहः येषामात्मयोग्यगौरवात् सन्नाहमकुर्वाणैरिति भावः । प्रचलन्ती या असिलता तया दन्तुराणां निम्नोन्नतानां, चमूनां कोटयः शतलक्षपरिमिताः सेनाः, भ्रातृभिराक्रान्ताः पतन्ति भूमौ शेरते इत्यर्थः । स्रग्धरा वृत्तम् ।

(२) विज्ञातः पाण्डवानां प्रभावो यथेति सोपहासमिदं, तेषां प्रभावो नास्त्येव तत्त्वयाऽप्यनुभूतमिति भावः ।

(३) तेषां प्रतिज्ञापूरणाभावेन अप्रभावत्वं दर्शयति, दुःशासनस्येत्यादि ।—हृदयस्य क्षतजं रुधिरमेव, अम्बु तस्य पाने, दुर्योधनस्य मम, ऊरुभङ्गे यथा प्रतिज्ञा न सफला, तथेयमपि न फलिष्यतीति भावः । वसन्ततिलकं वृत्तम् ।

(४) जैत्रं जयसाधनम् ।

---

(क) जाते ! साधु, कालोचितं त्वया मन्त्रितम् ।

दहमपि [*] तस्य प्रगल्भस्य पाण्डवस्य मिथ्याप्रतिज्ञा-वैलक्ष्यसम्पादितमशस्त्रपूतं (१) मरणमुपदिशामि।

[प्रविश्य कञ्चुकी]। देव!

(२) उद्घातक्वणितविलोलहेमघण्टः
प्रालम्बद्विगुणितचामरप्रहासः।
सज्जोऽयं नियमितवल्गिताकुलाश्वः
शत्रूणां क्षपितमनोरथो रथस्ते॥

राजा। देवि! प्रविशत्वभ्यन्तरमेव, यावदहमपि [तस्य प्रगल्भस्येत्यादि पठित्वा परिक्रामति]।

[इति निष्क्रान्ताः सर्वे]।

इति द्वितीयोऽङ्कः।

---

(१) मिथ्या सूर्य्यास्तसमयमध्ये जयद्रथावधेन विफलया, प्रतिज्ञया यत् वैलक्ष्यं लज्जा, तेन सम्पादितम् अशस्त्रपूतं शस्त्रेण मरणं हि क्षत्रियाणां पवित्रं, तच्च आत्मघातित्वेन शस्त्रेण न पूतम्, अश्राद्धभोजीत्यादिसमर्थनेनापि नञा समासः। वैलक्ष्यं सम्पादयन्निति पाठे—तत् कुर्वन्नित्यर्थः।

(२) उद्घातः आघातः, तेन क्वणिता शब्दायिता, विलोला हेमघण्टा यत्र, प्रालम्बस्य लम्बमानस्य, द्विगुणितस्य पार्श्वद्वये द्विधा बद्धस्य, चामरस्य प्रहासः प्रकाशो यत्र, अथवा चामरः प्रहास इव शुभ्रत्वात् यत्रेति समासः, नियमिताः यन्त्रिताः, अत एव वल्गिताः गतिभेदेन चालिताः, आकुला अश्वा यत्र। प्रहर्षिणी वृत्तं, "त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति तल्लक्षणात्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वेणीसंहारनाटकव्याख्याने विप्रलम्भाख्यो द्वितीयोऽङ्कः।

---

* [जयद्रथपरिरक्षणेन] क्वचिदित्यधिकः पाठः।

# तृतीयोऽङ्कः।

[ ततः प्रविशति विकृतवेशा राक्षसी ]।

राक्ष। [ विकृतं विहस्य सपरितोषम् ]।

हदमाणुसमंससोणिदेहिं कुंभसहस्सं वसाहिं संचिदम्।
अणिसं अ पिबामि सोणिअं समले वलिससदं हुवीअदु ॥

[ इति नृत्यन्ती सपरितोषम् ]।

जइ सिंधुराअवहदिवहे विअ दिअहे दिअहे समलकम्म पडिवज्जइ अज्जुणो, तदो पज्जत्तभलिदकोट्ठागाले मंससोणिदेहिं मे गेहे हुविस्सदि। [ परिक्रम्य दिशोऽवलोक्य ]। अध कहिं णु लुहिलप्पिए हुवीअदि? ता जाव इमस्सिं समले पिअभत्तालं लुहिलप्पिअं अण्णेसामि। [ परिक्रम्य ]। होदु, सद्दाविस्सं दाव। लुहिलप्पिआ! लुहिलप्पिआ! इदो एहि इदो एहि। (क)

[ ततः प्रविशति तथाविधो राक्षसः ]।

राक्ष। [ भ्रमणं नाटयन् ]। पच्चग्गहदाणं मंसए जइ

---

(क) हतमानुषमांसशोणितैः कुम्भसहस्रं वसाभिः संचितम्।
अनिशञ्च पिबामि शोणितं समरे वर्षशतं भवतु ॥

यदि सिन्धुराजवधदिवसे इव दिवसे दिवसे समरकर्म प्रतिपद्यतेऽर्जुनः, ततः पर्य्याप्तभरितकोष्ठागारं मांसशोणितैर्मम गृहं भविष्यति। अथ क्व नु रुधिरप्रियो भविष्यति? तत् यावदस्मिन् समरे प्रियभर्त्तारं रुधिरप्रियमन्वेषयामि। भवतु, शब्दायिष्ये तावत्। रुधिरप्रिय! रुधिरप्रिय! इत एहि इत एहि। भरितं पूर्णं, कोष्ठागारं धान्यादिस्थापनस्थानं "कुटी" इति प्रसिद्धं यस्य गृहस्य तत्। रुधिरप्रिया इति दूराह्वानाय प्लुतस्वरसूचनायैतमाकारान्ततयोक्तम्।

छण्हे लुहिले अ लंभइ, ता एसो मह पलिस्समे क्खणमेत्तं ज्जेव लहु णस्सइ। (क)

राक्षसी। [पुनर्व्याहरति]।

राक्ष। [आकर्ण्य]। अले! के एसे मं सद्दावेदि? [विलोक्य]। अले! कहं वसागंधा!! [उपसृत्य]। वसागंधे! मं कीस सद्दावसि?। (ख)

राक्षसी। लुहिलप्पिआ! एदं क्खु तुह कालणादो पच्चग्गहदस्स कस्स वि लाएसिणो सलीलावअवप्पहुदं प्पहूदवसासिणेहचिक्कणं कोस्लं लुहिलं अग्गमंसं अ आणीदं, ता पिवाहि णं। (ग)

राक्ष। [सपरितोषम्]। साहु वसागंधे! साहु, सोहणं तुए किदं, जं कोसिणं कोसिणं लुहिल आणीदं, बलिअह्मि पिवासिए। (घ)

राक्षसी। लुहिलप्पिआ! एदिसे हदणलगअतुलंगमसोणिअवसासमुद्दुस्संचले समलांगणे पडिब्भमंते तुमं पिवासिएसि त्ति अच्चलिअं अच्चलिअं। (ङ)

(क) प्रत्यग्रहतानां मांसं यद्युष्णं रुधिरञ्च लभ्येत, तदैष मम परिश्रमः क्षणमात्रमेव लघु नश्येत्। प्रत्ययमभिनवम्।

(ख) अरे! का एषा मां शब्दायते? अरे! कथं वसागन्धा!! वसागन्धे! मां कस्मात् शब्दायसे?।

(ग) रुधिरप्रिय! इदं खलु तव कारणात् प्रत्यग्रहतस्य कस्यापि राजर्षेः शरीरावयवप्रभूतं प्रभूतवसास्नेहचिक्कणं कोष्णं रुधिरमग्रमांसञ्च आनीतं, तत् पिबैनत्।

(घ) साधु वसागन्धे! साधु, शोभनं त्वया कृतं, यत् कोष्णं कोष्णं रुधिरमानीतं, बलवदस्मि पिपासितः। बलवदतिशयितम्।

(ङ) रुधिरप्रिय! ईदृशे हतनरगजतुरङ्गमशोणितवसासमुद्रदुस्तरे समराङ्गणे परिभ्रमन् त्वं पिपासितोऽसि इति आश्चर्यम् आश्चर्यम्।

राच। [ सक्रोधम् ]। अले वसागंधे! पुत्तघडक्कअसोअसंतत्तहिअअं सामिणीं पेक्खिदुं गदह्मि। (क)

राचसी। लुहिलप्पिआ! अज्जवि सामिणीए हिडिंबादेवीए घडक्कअसोए ण उपसम्मइ? । (ख)

राच। अइ! कुदो से उवसमे, किंतु अहिमण्णुवहसोअसमाणदुक्खाए सुभद्दादेवीए जण्णसेणीए अ समास्सासीअदि। (ग)

राचसी। लुहिलप्पिआ! गेह्न एदं हत्थिसिलकवालसंचिअं अग्गमंसोवदंसं पिवाहि णवसोणिआसवं। (घ)

राच। [ तथा कृत्वा ]। वसागंधे! अह किअ प्पहुदं तुए संचिअं लुहिलं अग्गमंसं अ? । (ङ)

राचसी। अले लुहिलप्पिआ! पुव्वसंचिअं तुमं ज्जेव जाणासि, णवसंचिअं सिणु, भअदत्तसोणिअकुंभे, सिंधुलाअवसाकुंभे दुवे, मच्छाहिवभुलिस्सवसोमदत्तवल्लीअप्पमुहाणं

(क) अयि वसागन्धे! पुत्रघटोत्कचशोकसन्तप्तहृदया स्वामिनीं प्रेक्षितुं गतोऽस्मि। स्वामिनीं हिडिम्बादेवीम्।

(ख) रुधिरप्रिय! अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कचशोको नोपशाम्यति? ।

(ग) अयि! कुतोऽस्या उपशमः, किन्तु अभिमन्युवधशोकसमानदुःखया सुभद्रादेव्या याज्ञसेन्या च समाश्वास्यते।

(घ) रुधिरप्रिय! गृहाणैतत् हस्तिशिरःकपालसञ्चितमग्रमांसोपदंशं पिब नवशोणितासवम्। "उपदंशस्तृतीयायाम्" ३। ४। ४७ पा० सू० ल्यप्, मांसेन सहोपदश्यार्थात् मांसेन सह भुक्त्वेत्यर्थः, नवशोणितमासवमिव स्वादुत्वात्, अत एव उपदंशसाहित्यमुक्तम्।

(ङ) वसागन्धे! अथ कियत् प्रभूतं त्वया सञ्चितं रुधिरमग्रमांसञ्च? ।

अलिंदाणं प्पाकिदपुलिसाणं अ लुहिलवसामंसस्स घटा अवि-णद्दमुहा सहस्ससंखा संति मे गेहे। (क)

राक्ष। (सपरितोषमालिङ्ग्य)। साहु सुग्गहिणि! साहु, इमिणा दे सुग्गहिणीत्तणेण, अज्ज उण सामिणीए हिडिंबा-देवीए संविहाणेण अ पणट्ठे मे दालिद्दं। (ख)

राक्षसी। लुहिलप्पिआ! कीलिसे सामिणीए संविहाणए किदे?। (ग)

राक्ष। अज्ज अहं सामिणीए हिडिंबादेवीए सबहुमाणं सद्दाविअ आणत्ते, जधा लुहिलप्पिआ! अज्ज पहुदि अज्ज-उत्तस्स भीमसेणस्स पिट्ठदो अणुपिट्ठं समले तुए आहिंडि-दव्वं त्ति। ता तस्स अणुमग्गगामिणो हदमाणुसमोणिअ-णद्दंसणप्पणट्ठबुभुक्खापिवासस्स इह ज्जेव मे सग्गलोओ हुवी-अदि, तुमं वि विस्सद्धा भविअ लुहिलवसाहिं कुंभसहस्सं संचेहि। (घ)

---

(क) नाथ रुधिरप्रिय। पूर्वसञ्चितं त्वमेव जानासि, नवसञ्चितं शृणु, भग-दत्तशोणितकुम्भः, सिन्धुराजवसाकुम्भो द्वौ, मत्स्याधिपभूरिश्रवःसोमदत्तबाह्लीक-प्रमुखाणां नरेन्द्राणां प्राकृतपुरुषाणाञ्च रुधिरवसामांसस्य घटाः अपिनद्धमुखाः सहस्रसङ्ख्याः सन्ति मे गेहे। अपिनद्धमनावृतं, मुखं येषां ते। बहुकालस्थाप-नाय मुखावृतिः।

(ख) साधु सुगृहिणि। साधु, अनेन ते सुगृहिणीत्वेन, अद्य पुनः स्वामिन्याः हिडिम्बादेव्याः संविधानेन च प्रनष्टं मे दारिद्र्यम्।

(ग) रुधिरप्रिय। कीदृशं स्वामिन्या संविधानं कृतम्?। संविधानं नियोगः।

(घ) अद्याहं स्वामिन्या हिडिम्बादेव्या सबहुमानं शब्दाय्य आज्ञप्तः, यथा रुधिरप्रिय! अद्य प्रभृति आर्य्यपुत्रस्य भीमसेनस्य पृष्ठतोऽनुपृष्ठं समरे त्वया आहिण्डि-तव्यमिति। तस्य अनुमार्गगामिनो हतमानुषशोणितमदोदर्शनप्रनष्टबुभुक्षा-पिपासस्य इहैव मे स्वर्गलोको भवति, त्वमपि विस्रब्धा भूत्वा रुधिरवसाभ्यां कुम्भ-सहस्रं सञ्चिनु। आहिण्डितव्यं भ्रमितव्यमित्यर्थः।

राक्षसी। लुहिलप्पिआ! किं णिमित्तं कुमालभीमसेणस्स पिट्ठदो अणुपिट्ठं आहिंडीअदि?। (क)

राक्ष। वसागधे! तेण हि सामिणा विओदलेण दुस्सासणस्स लुहिलं पादुं पडिस्सादं, तं अह्मेहिं लक्कसेहिं अणुप्पविसिअ पादव्वं त्ति। (ख)

राक्षसी। [सहर्षम्]। साहु सामिणिए! साहु, सुसंविहाणे मे भट्टा तुए किदे। (ग)

[नेपथ्ये। महान् कलकलः। उभावाकर्णयतः]।

राक्षसी। [आकर्ण्य ससम्भ्रमम्]। अले लुहिलप्पिआ! किं णु क्खु एसे महंते कलकले सुणीअदि?। (घ)

राक्ष। [दृष्ट्वा]। वसागंधे! एसे धिट्ठज्जुमणेण दोणे केसेसु आकड्ढिअ असिवत्तेण वावादीअदि। (ङ)

राक्षसी। [सहर्षम्]। लुहिलप्पिआ! लुहिलप्पिआ! अह्मे वि गच्छिअ दोणस्स लुहिलं पिवह्म। (च)

राक्ष। [सभयम्]। वसागंधे! ब्रह्मणसोणिअं क्खु एदं गलं दहंते प्पविसदि, ता किं एदिणा। (छ)

[नेपथ्ये। पुनः कलकलः]।

---

(क) रुधिरप्रिय! किं निमित्तं कुमारभीमसेनस्य पृष्ठतोऽनुपृष्ठमाहिण्ड्यते?।

(ख) वसागन्धे। तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातं, तदस्माभिः राक्षसैः अनुप्रविश्य पातव्यमिति।

(ग) साधु स्वामिनि। साधु, सुसंविधानो मे भर्त्ता त्वया कृतः।

(घ) अरे रुधिरप्रिय। किं नु खल्वेष महान् कलकलः श्रूयते?।

(ङ) वसागन्धे! एष धृष्टद्युम्नेन द्रोणः केशेषु आकृष्य असिपत्रेण व्यापाद्यते।

(च) रुधिरप्रिय! रुधिरप्रिय! वयमपि गत्वा द्रोणस्य रुधिरं पिबामः।

(छ) वसागन्धे! ब्राह्मणशोणितं खल्वेतत् गलं दहत् प्रविशति, तत् किमेतेन।

राक्षसी। रुहिलप्पिआ! पुणो वि एसे महंते कलअले सुणीअदि ?। (क)

राक्ष। [नेपथ्याभिमुखमवलोक्य]। वसागंधे! एसे क्खु अस्सत्थामे आकड्ढिदासिवत्ते इदो ज्जेव आअच्छदि, कदावि दुवदसुदलोसेण अह्मेवि वावादइस्सदि; ता एहि, सामिणीए हिडिंवादेवीए आणत्तिं कलेह्म। (ख) [इति निष्क्रान्तौ। प्रवेशकः]। (१)

[ततः प्रविशत्युत्खातखड्गः (२) कलकलमाकर्णयन्नश्वत्थामा]।

अश्व। (३) महाप्रलयमारुतक्षुभितपुष्करावर्त्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ?॥

---

(१) "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" इति दर्पणोक्तेः अनुदात्तस्वरेण नीचपात्रप्रयुक्तत्वात् वृत्तानां सिन्धुराजादिवधानां वर्त्तिष्यमाणदुःशासनवधादेः कथांशस्य सूचनरूपविष्कम्भकलक्षण-वत्त्वात् द्वितीयतृतीयाङ्कयोर्मध्यवर्त्तित्वाच्च प्रवेशकनामकं नाटकाङ्गम्।

(२) कलकलमाकर्णयन् उत्खातखड्गः उत्खातः कोषादुद्धृतः, खड्गो येन।

(३) प्रलयकालमारुतेन क्षुभितो चालितो, पुष्करावर्त्तको प्रलयकालिको मेघ-भेदौ, तयोः प्रचण्डघनगर्जितं भीषणनिरन्तरस्तनितं, तस्य प्रतिरुतानुकारी प्रतिध्वनि-सदृशः, स्थगितं प्रतिध्वनिशब्देन व्याप्तं, रोदसी द्यावापृथिव्यावेव, कन्दरं दरी येन। समरमेवोदधिस्तस्मात्, अभूतपूर्वः पूर्वं न भूतः। पुरः अग्रे, कुतः ? कस्मात् कारणात् ?।

---

(क) रुधिरप्रिय! पुनरपि एष महान् कलकलः श्रूयते ?।

(ख) वसागन्धे! एष खलु अश्वत्थामा आकृष्टासिपत्र इत एवागच्छति, कदाऽपि द्रुपदसुतरोषेण अस्मानपि व्यापादयिष्यति; तदेहि, स्वामिन्या हिडिम्बादेव्या आज्ञप्तिं कुर्मः।

[विचिन्त्य]। ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रान्तमर्य्यादेन परिकोपितस्तातः समुत्सृज्य शिष्यप्रियतामात्मसदृशमाचेष्टते। तथा हि—

(१) यत् दुर्य्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे
रामाल्लब्धसमस्तहेतिगुरुणो वीर्य्यस्य यत् साम्प्रतम्।
लोके सर्वधनुष्मतामधिपतेर्यच्चानुरूपं रुषः
प्रारब्धं रिपुघस्मरेण नियतं तत् कर्म तातेन मे॥

[पृष्ठतो विलोक्य]। तदलमिदानीं मम रथप्रतीक्षयाऽनया, शस्त्रस्यास्मि, सजलजलधरप्रभाभास्वरेण सुप्रग्रहविमलकलधौतत्सरुणा (२) खड्गेन यावत् समरभुवमवतरामि। [परिक्रम्य वामाक्षिस्पन्दनं सूचयित्वा]। आः! कथं ममापि नाम(३) अश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रम-

---

यस्य श्रूयमाणः, अयमभैरवः। पृथ्वी वृत्त, "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात्।

(१) दुर्य्योधनस्य पक्षपातः आनुकूल्यं, साहाय्यकरणमिति यावत्, तत्सदृशं तदनुरूपम्, अस्त्रग्रहे अस्त्रग्रहणे च यदुचितं, रामात् परशुरामात्, लब्धाभिः समस्तहेतिभिः गुरुणो लब्धगौरवस्य, वीर्य्यस्य यत् साम्प्रतं युक्तं, सर्वधनुर्द्धारिणामधिपतेः रुषः क्रोधस्य, यदनुरूपं, रिपुघस्मरेण शत्रुनाशकेन, तातेन तत् कर्म्मैव प्रारब्धं, नियतमित्युत्प्रेक्षायाम्, एतावत्कोलाहलसूचकम् अधुनोक्तकर्म प्रारब्धमित्युत्प्रेक्षे, अन्यथा ईदृशः कोलाहलः कथं स्यात्? इत्याशयः। शार्दूलविक्रीडितं वृत्तम्।

(२) सुप्रग्रहः सुखग्राह्यः, विमलः कलधौतः तप्तकाञ्चननिर्मितः, त्सरुः मुष्टिस्थानं यस्य तादृशेन, खड्गेन, "रश्म्यादिरश्मौ रश्मौ च प्रग्रहः सुग्रहेऽपि च" इति विश्वः। "त्सरुः खड्गादिमुष्टौ स्यात्" इत्यमरः।

(३) नाम सम्भावनायां, कथं-शब्देन तस्य योगः, तेन विघ्नमुत्पादयन्तीति कथं सम्भाव्यते? नैव सम्भाव्यते इत्यर्थः।

दर्शनकालमस्यानिमित्तानि (१) समरगमनविघ्नमुत्पादयन्ति !! भवतु अवगच्छामि। [ सावष्टम्भं परिक्रम्य अग्रतो विलोक्य ]। कथमवधीरितमकलत्त्वात्रधर्मणाम्, (२) उत्सृष्टमत्पुरुषोचित-लज्जावगुण्ठनानां,(३)विस्मृतस्वामिसत्कारलघुचेतसां, (४)त्यक्त-द्विरदतुरङ्गमचरणचारिणाम्, (५) अगणितकुलवयःसदृशपरा-क्रमव्रतानां,रणभूमेः समन्तादपक्रामताम्(६)अयं महान् नादो बलानाम् !! [ अन्यतोऽवलोक्य ]। हा धिक्! कष्टम्! कथमेते महारथाः कर्णादयोऽपि समरात् पराङ्मुखा भवन्ति !! [ साशङ्कम् ]। कथं नु ताताधिष्ठितानामपि बलानामियमवस्था भवेत् !! भवत्वेवं तावत्, भो भोः कौरवसेनासमुद्रवेलापरि-पालनमहामहीधरा नरपतयः! कृतं कृतं (७) समरपरि-त्यागसाहसेन।

(८) यदि समरमपास्य नास्ति मृत्योः
भयमिति युक्तमितोऽन्यतः प्रयातुम्।

---

(१) अनिमित्तानि दुर्निमित्तानि, "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥" इत्युक्तेरप्राशस्त्ये इह नञ्।

(२) क्षात्रधर्मणामित्यत्र "धर्मादनिच् केवलात्" (५। ४। १२४ सू० पा०) अनिच्। धर्माणामिति पाठे तु—समासान्तविधेरनित्यत्वान्नानिच्।

(३) सत्पुरुषैरुचिताऽभ्यस्ता, चिरपरिचिता, या लज्जा सा अवगुण्ठनमिवावरण-मिव, तदुत्सृष्टं यैः।

(४) विस्मृतः स्वामिसत्कारो भर्तृसम्मानो यैः, अत एव लघु क्षुद्रं, चेतो येषां ते, पश्चात् कर्मधारयः तेषाम्।

(५) त्यक्तौ द्विरदतुरङ्गमौ यैः तथाभूताः सन्तश्चरणाभ्यां चरन्तीति तेषाम्।

(६) रणभूमेः अपक्रामतां पलायमानानाम्। "अपक्रमोऽपयानं स्यात्" इत्यमरः।

(७) "कृतं क्लीवन्तु निष्फले" इति विश्वः। वीप्सायां द्वित्वम्।

(८) यदीति।—यदि समरं सङ्ग्रामम्, अपास्य त्यक्त्वा, गतस्येति शेषः, मृत्योः

अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम् ? ॥

अपि च।

(१) अस्त्रज्वालाऽवलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं सम्भ्रमेण व्रज कृप ! समरं मुञ्च हार्दिक्य ! शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः ? ॥

[ नेपथ्ये ]। कुतोऽद्यापि ते तातः ?।

अश्व। [ श्रुत्वा ]। किं ब्रूथ ? कुतोऽद्यापि ते तात इति ?। आः क्षुद्राः समरभीरवः ! कथमेवं प्रलपतां वः सहस्रधा न दीर्णमनया जिह्वया।

(२) दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।

भयं नास्ति, तदा इतः समरात्, अन्यतः अन्यत्र, प्रयातुं पलायितुमित्यर्थः, युक्तम् उचितमिति. अथ पक्षान्तरे, जन्तोः प्राणिनः, अवश्यमेव निश्चितमेव, मरणं, भविष्यतीति शेषः, तदा किमिति कथं. यशः मुधा निष्कारणं, मलिनं कुरुध्वम ?। पुष्पिताग्रा वृत्तम्. "अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात।

(१) अस्त्रं ज्वाला शिखेव, तया अवलीढः आक्रान्तः, प्रतिबलं प्रतिकूलसैन्यं, जलधिरिव प्रतिभटसमुद्रः, तस्यान्तर्मध्ये, और्वायमाणे वाडवानल इवाचरति, सर्वधन्वीश्वराणां गुरौ सेनापतौ स्थिते सति सम्भ्रमेण भयेन, अलं भयसाध्यं नास्ति, कर्णस्य भीरुतया रणभङ्गस्य प्रसिद्धतया प्राक् निवारणम् ; हार्दिक्य ! हृदिकापुत्र ! कृतवर्मन् ! शङ्का भयं, मुञ्च, मातुलनामसम्बोधनेन भीरुत्वं सूचितम् ; भयाभावे हेतुमाह, ताते इत्यादि. चापद्वितीये धनुर्मात्रसहाये, रणधुरां रणभारं, रणापवारयित्वमिति यावत्, वहति सति भयस्य कोऽवकाशः ? स्थानम् ? न कोऽपीत्यर्थः। स्रग्धरा वृत्तम्।

(२) दहनाः दाहकराः, किरणास्तैः द्वादश अर्काः सूर्याः, "धाता मित्रोऽर्यमा

छन्नं मेघैर्न गगनतलं पुष्करावर्त्तकाद्यैः

पापं पापाः! कथयत कथं शौर्य्यराशेः पितुर्मे ?॥

[ प्रविश्य सम्भ्रान्तः सप्रहारः सूतः ]। परित्रायतां परित्रायतां कुमारः। [ इति पादयोः पतति ]।

अश्व। [ विलोक्य ]। अये! तातस्य सारथिरश्वसेनः !!। आर्य्य! त्रैलोक्यत्राणक्षमस्य सारथिरसि, किं मत्तः शिशुजनात् परित्राणमिच्छसि ?।

सूत। [ उत्थाय सकरुणम् ]। कुमार! कुतोऽद्यापि ते तातः ?।

---

रुद्रो वरुणः सूर्य्य एव च। भगो विवस्वान् पूषा च सविता दशमः स्मृतः॥ एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते॥" इत्युक्ताः। सप्त वाताः मरुतः, सप्तधा भिन्नाः ऊनपञ्चाशद्वा भिन्नाः सन्तः, ते वाताः गच्छन्ति, "मरुतो नाम ते देवा गणा ये सप्तसप्तकाः।" ऊनपञ्चाशत वायवश्च हेमाद्रौ व्रतखण्डे ध्यानप्रकरणे सलक्षणा दर्शिताः, ४९ नामतश्चेऽभिधीयन्ते, श्वसनः १ स्पर्शनः २ वायुः ३ मातरिश्वा ४ सदागतिः ५ महाबलः ६ बलवर्द्धनः ७ पृषदश्वः ८ गन्धवहः ९ गन्धवाहकः १० अनिलः ११ आशुगः १२ सुसुखः १३ कर्करः १४ समीचणः १५ समीरणः १६ अनुत्तमः १७ मारुतः १८ नागयोनिजः १९ जगत्प्राणः २० पावकः २१ वातः २२ प्रभञ्जनः २३ पवमानः २४ नभस्वान् २५ अतिबलः २६ तरस्वी २७ द्रावणः २८ दैवपचकः २९ पापवाहकः ३० रयवाट् ३१ ऊर्द्धहक् ३२ गतिरोधनः ३३ पार्थिवः ३४ साधकः ३५ विश्वपूरकः ३६ जगदाश्रयः ३७ विश्वातिरक्षी ३८ प्रजागरः ३९ विश्वोदरः ४० आयगः ४१ तीव्रगः ४२ असुरहा ४३ विश्ववर्द्धनः ४४ भद्रजवः ४५ पुष्करजः ४६ अञ्जनीपतिः ४७ व्यक्तमूर्त्तिः ४८ विश्वगः ४९ इति। पुष्करः आवर्त्तकः संवर्त्तः द्रोण एते मेघनायकाः. प्रलयकाले अस्त्रगणैः सह मिलिता वर्षन्ति, तेषामुत्पत्तिमभिधाय "पुष्करावर्त्तकास्तेन कारणेनेह विश्रुताः। नानारूपधरास्ते तु महाघोरस्वनाश्च ये॥ कल्पान्ते वृष्टिकर्त्तारः संवर्त्ताग्नेर्नियामकाः॥" इति ब्रह्माण्डपुराणे ५८ अध्याये द्रष्टव्यम्। प्रलयकाले एव द्वादशादित्यादेरुदयात्, तदभावे कथं गुरोः पापमनिष्टं, मरणं वदत। तथा च प्रलयकालं विना तस्य मरणं न सम्भवतीत्याशयः। मन्दाक्रान्ता वृत्तम्।

अश्व। [सावेगम्]। किम्!! [* तातो नामास्तमुपगतः ?]।

सूत। अथ किम्।

अश्व। हा तात! हा तात!। [इति मोहमुपगम्य पतितः]।

सूत। कुमार! समाश्वसिहि समाश्वसिहि।

अश्व। [लब्धसंज्ञ उत्थाय सास्रम्]। हा तात! हा सुतवत्सल! हा लोकत्रयैकधनुर्द्धर! हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन्! [†]

सूत। कुमार! अलमत्यन्तशोकावेगेन, वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि त्वदनुरूपेणैव वीर्य्येण शोकसागरमुत्तीर्य्य सुखीभव।

अश्व। [अश्रूणि विमुच्य]। आर्य्य! कथय कथय कथं तादृग्भुजवीर्य्यसागरस्तातोऽपि नामास्तमुपगतः ?।

(१) किं समात् गुरुदक्षिणां गुरुगदां भीमप्रियः प्राप्तवान् ?

सूत। शान्तं पापम्।

अश्व। अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ?।

सूत। कथमेवं भविष्यति।

अश्व। गोविन्देन सुदर्शनस्य नियतं धारापथं प्रापितः ?

सूत। तदपि नास्ति।

(१) भीमप्रिय इत्यनेन ताम्रग्रत्वेन स्ववीर्य्यं न प्रकाशितम्, अतो भीमेन यथेष्टमाचरितमिति भावः। एवम् अन्तेवासिदयालुत्वमपि उपेक्षाया बीजं, जिष्णुना अर्जुनेन, आसादितः व्यापादितः। शार्दूलविक्रीडितं वृत्तम्।

* [तात एव नास्ति ?] क्वचिदित्येव पाठः।

† [क्वासि, प्रयच्छ मे प्रतिवचनम्] इति क्वचिदधिकः पाठः।

अश्व। शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥

सूत। कुमार!

(१) एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति सङ्ख्ये।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदाऽस्य विहितं रिपुणाऽतिघोरम् ॥

अश्व। किं पुनः कारणं शोकस्य अस्त्रपरित्यागस्य वा?।

सूत। ननु कुमार एव कारणम्।

अश्व। कथमहमेव!!।

सूत। [अश्रूणि विमुच्य]। श्रूयताम्—

(२) अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा।
तच्छ्रुत्वाऽसौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥

अश्व। हा तात! हा सुतवत्सल! हा वृथामदर्थपरि-

---

(१) महास्त्रपाणेरित्यनेनास्त्रधारणेऽयं तेनापि दुर्जेय इति सूचितम्। अतिघोरं नृशंसत्वं, त्यक्तास्त्रस्य हिंसनमनार्यकार्यम्। रिपुणा तद्वधार्थमेवोत्पन्नेन सहजरिपुणा धृष्टद्युम्नेन, विहितम्। अस्त्रत्यागे हेतुमाह, शोकेत्यादि।—शोकेन उपरुद्धं व्याप्तं, हृदयं यस्य तथाभूतेन, शोकार्तस्य अस्त्रत्यागः समुचित इति भावः। वसन्ततिलकं वृत्तम्।

(१) शेषे वाक्यस्यावसाने, गज इति पदं स्वैरं मन्दं, न तु परबोधेच्छया, तेनास्य श्रवणायोग्यता तथा च अस्पष्टमित्यर्थः; अत एव तस्य न सत्यवादिताव्याघात इति सूचयन् विशिनष्टि, सत्यवाचेति, तत अश्वत्थामा हत इति स्पष्टं वाक्यावयवं, श्रुत्वा तस्य राज्ञः प्रत्ययात् सत्यवादित्वविश्वासात्, आजौ शस्त्राणि अश्रुजलञ्च तुल्यमेककालमेव, मुमोच। इह अभूताहरणनामा गर्भसन्धिः, तदुक्तं भरतेन "छलं भूतस्य यद्वाक्यमभूताहरणन्तु तत्" इति। मन्दाक्रान्ता वृत्तम्।

त्यक्तजीवित ! हा शौर्य्यराशे ! हा शिष्यप्रिय ! हा युधिष्ठिर-पक्षपातिन् ! [ इति रोदिति ]।

सूत । कुमार ! अलमत्यन्तपरिदेवनकार्पण्येन (१) ।

अश्व । (२) श्रुत्वा वध मम मृषा सुतवत्सलेन
तात ! त्वया सह शरैरसवो विमुक्ताः ।
जीवाम्यहं पुनरथो भवता वियुक्तः
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥

[ इति मोहमुपगतः ] ।

[ नेपथ्ये ] । समाश्वसितु समाश्वसितु कुमारः ।

[ ततः (३) प्रविशति कोहनः कृपः ] ।

कृप । (४) धिक् मानुजं कुरुपतिं धिगजातशत्रुं
धिक् भूपतीन् विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥

(१) अत्यन्तपरिदेवनकार्पण्येन अतिमात्रविलापदैन्येन ।

(२) मम मिथ्यामरणश्रवणान्मृतप्रायस्य तव सत्य मरणेऽपि जीवतो मम अयथाऽऽचरणात् क्रूरत्वं, तादृशे क्रूरे मयि तव पक्षपातः स्नेहः, मुधा वृथेत्यर्थः । वसन्ततिलकं वृत्तम् ।

(३) अत्र कृप । समरमित्यनेन कृपस्य सूचनात् ततः प्रविशतीत्युक्तिः सङ्गच्छते, सूचितप्रवेशस्यैव नाट्ये प्रवेशनस्य पूर्वं भरतवाक्येन प्रतिपादितत्वात् ।

(४) तदा द्यूतकाले, द्रौपद्याः अद्य च द्रोणस्य केशग्रहः बलात्कारेण केशधारणं, यैः अस्मद्विधैर्भूपतिभिरस्माभिश्च, लिखितैः चित्रन्यस्तैरिव, वीक्षितः, न तु प्रतीकारार्थं चेष्टितं, तान् भूपतीन् अस्मांश्च धिक्, शस्त्रभृत्त्वविशेषणेन प्रतीकारक्षमतासामर्थ्येऽपि तदकरणेनातिनिन्दितत्वमिति सूचितम् । दुष्टकर्मद्रष्टृपेक्षया तत्कर्तुः निन्दिततरत्वात् प्रथमं तन्निर्देशः, तत्रापि क्रमप्राप्तद्रौपदीकेशग्रहकर्तुः कुरुपतेः प्राथम्येन, द्वितीयकेशग्रहहेतुकर्तुर्युधिष्ठिरस्य पश्चात् निर्देशः । कुरु-

तत् कथं नु खलु वत्सं द्रक्ष्याम्यश्वत्थामानम्? अथवा हिमवत्सारगुरुचेतसि (१) ज्ञातलोकस्थितौ तस्मिन् न खलु शोकावेगमहमाशङ्के, किन्त्वसदृशं पितुः पराभवमुपश्रुत्य किं व्यवस्यतीति न जाने। अथवा—

(२) एकस्य तावत् पाकोऽयं [*] दारुणो भुवि वर्त्तते।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः॥

[विभाव्य]। तदयं वत्सस्तिष्ठति, यावदुपसर्पामि। [उपसृत्य ससम्भ्रमम्]। वत्स! समाश्वसिहि समाश्वसिहि।

अश्व। [संज्ञां लब्ध्वा सास्रम्]। हा तात! हा सकलभुवनैकगुरो! [आकाशे]। युधिष्ठिर! युधिष्ठिर!

(३) आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः।
ताते गुरौ द्विजवरे मम भाग्यदोषात्
सर्वं तदेकपद एव कथं निरस्तम्?॥

---

पतेरपि स्वयं केशग्रहाकर्णनात् सानुशयमिति विशेषणम्। वसन्ततिलकं वृत्तम्।

(१) हिमवतो हिमालयस्य, सारमिव स्थिरांश इव, गुरु धैर्य्यान्वितत्वात् अवष्टम्भि, अचञ्चलमिति यावत्, चेतो यस्य तादृशेऽस्मिन् अश्वत्थाम्नि।

(२) एकस्य केशग्रहस्य, द्रौपद्या इति शेषः, अयं प्रत्यक्षेणानुभूयमानः, तावदित्युपक्रमेऽव्ययम्, उपक्रान्त इत्यर्थः, दारुणः अनिष्टबहुलः, पाकः परिणामः, सङ्ग्रामरूपं फलमित्यर्थः; द्वितीये द्रोणस्य केशग्रहे सति, प्रजाः निःशेषिताः, भविष्यन्तीति शेषः, नूनमित्युत्प्रेक्षायाम्। इह उद्भेदाख्यं मुखाङ्गं, यथोक्तं दर्पणे, "रहस्यार्थस्य तूद्भेदः क्षेपः स्यात्" इति। पथ्यावक्त्रं वृत्तम्।

(३) तत् द्वेष्टृत्वाभावः मिथ्यावादित्वाभावश्चेति द्वयम्, एकपदे एकस्थाने, एक-

---

* [एकस्यैव विपाकोऽयम्] इति दर्पणधृतपाठः।

सूत । कुमार ! एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

अश्व । [ पार्श्वे विलोक्य सवाष्पम् ] । मातुल ! मातुल !

(१) गतो येनाद्य त्वमिह रणभुवं सैन्यपतिना
य एकः शूराणां गुरुसमरकण्डूनिकषणः ।
परोक्षासाक्षिन्याः सततमभवन् येन भवतः
स्वसुः श्लाघ्यो भर्त्ता क्व नु खलु स ते मातुल । गतः ? ॥

कृप । वत्स ! परिगतपरिगन्तव्य (२) एव भवान्, अलम् अत्यन्तशोकावेगेन ।

अश्व । मातुल ! परित्यक्तमेव मया परिदेवनम्, (३) एषोऽहं सुतवत्सलं तातमेवानुगच्छामि ।

कृप । वत्स ! अनुपपन्नमिदं भवद्विधानाम् ।

सूत । कुमार ! अलमतिसाहसेन ।

अश्व । आर्य्य ! किमुच्यते ?

(४) मद्वियोगभयात्तातः परलोकमितो गतः ।
सहिष्ये विरहं तस्य वत्सलस्य कथं पितुः ? ॥

स्निग्धेव विषये इति यावत्, द्विजवरे ब्राह्मणश्रेष्ठे ; शत्रुषु हीनेषु अपकृष्टेषु कथञ्चित् अस्त्रमपि तादृशे महद्व्यापारोऽत्यन्तमनुचित इति द्योतनाय विशेषणद्वय. कथं केन कारणेन, निरस्तम् ? न किञ्चिदन्यत् कारणं, किन्तु ममैव भाग्यदोषात् माध्य-कारण्यादित्यर्थः । वसन्ततिलकं वृत्तम् ।

(१) शूराणां वीराणां, गुरुसमरकण्डूनिकषणः श्रेष्ठरणेच्छारूपकण्डूतिनिवा-रणः, कण्डूः "चुल्कनि" इति प्रसिद्धः व्रणभेदः । श्लाघ्यः प्रशंसनीयः, ते स्वसुर्भर्त्ता भगिनीपतिः । शिखरिणी वृत्तम् ।

(२) परिगतं ज्ञात, परिगन्तव्यं वेदनीयं येन तथाभूतः, अतो न किञ्चिदावेद्यते इत्याशयः ।

(३) "विलापः परिदेवनम्" इत्यमरः ।

(४) वत्सलस्य मयि स्निग्धस्य, पितुः विरहं मया सह वियोगं, कथं सहिष्ये ? कथमात्मानं स्थापयिष्ये ? प्राणान् परिहरिष्ये इत्यर्थः । पथ्यावक्त्रं वृत्तम् ।

कृप । वत्स ! यावदयं संसारस्तावत् प्रसिद्धैवेयं लोकयात्रा (१) यत्, पुत्रैः पितरो लोकद्वयेऽपि (२) अनुवर्त्तनीया इति । पश्य—

(३) निवापाञ्जलिदानेन वितानैः श्राद्धकर्मभिः ।
तस्योपकारे शक्तस्त्वं नो जीवन् किमुतान्यथा ? ॥

सूत । आयुष्मन् ! यदाह शारद्वतः ।

अश्व । आर्य्य ! सत्यमेवेदं, किन्त्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान् धारयितुं, तत् गच्छामि तमेवोद्देशं, यत्र तादृशमपि पितरं द्रक्ष्यामि । [ इत्युत्तिष्ठन् खड्गमालोक्य विचिन्त्य ]। अलमद्यापि शस्त्रग्रहणविद्यया । [ सास्रमञ्जलिं बद्ध्वा ] । भगवन् शस्त्र !—

(४) गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्यासीन्न खलु तव कश्चिन्न विषयः ।

---

(१) लोकानां यात्रा समुदाचारेण प्रवृत्तिः ।

(२) लोकद्वयमिहलोकपरलोकौ तत्, अनुवर्त्तनीयाः यथायथं वाक्यपालन-श्राद्धादिभिरनुसरणीयाः, आनुकूल्येन सेवनीयाः इति यावत् ।

(३) ऐहिकोपकारस्य वाक्यपालनादेर्मृतपितुरसम्भवेन पारलौकिकमेवोपकारं दर्शयति, निवापेति ।—"पितृदानं निवापः स्यात्" इत्यमरः । निवापस्य पितृदानार्थं योऽञ्जलिः प्रसृताञ्जलिः जलाञ्जलिर्वा, तस्य दानेन, अश्वघास इत्यादिवत् निवापाञ्जल्योः प्रकृतिविकृतिभावविरहेऽपि सम्बन्धविवक्षया षष्ठ्या समासः । वितानैः यज्ञाङ्गैः तदुद्देशेन यज्ञमठादिगृहैर्वा, श्राद्धकर्मभिश्च तस्य मृतस्य पितुः, उपकारे जीवन् सन् नो शक्तः ? अन्यथा अजीवने, किमुत ? नैव समर्थ इत्यर्थः । पथ्यावक्त्रं वृत्तम् ।

(४) येन द्रोणाचार्य्येण, नोचितमपि अयुक्तमपि, नञर्थस्य न-शब्दस्य समासत्वेन नादेशः, "शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रावरुध्यते" इति स्मृत्या धर्मावरोधे एव द्विजातेः शस्त्रधारणस्य विहितत्वेनान्यत्र तद्धारणमनुचितमेवेति भावः, परि-

परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्
विमोच्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते ॥

[ इति परित्यक्तुमिच्छति ] ।

[ नेपथ्ये ] भो भो राजानः ! कथमिह भवन्तस्तत्रभवतः क्षत्रियगुरोर्भारद्वाजस्यासदृशं परिभवममुना नृशंसेन प्रयुक्तम् उपेक्षन्ते ? ( १ ) ।

अश्व। [ आकर्ण्य, सक्रोधं शनैः खड्गं स्पृशन् ] । किं किं गुरोर्भारद्वाजस्य परिभवः ? ।

[पुनर्नेपथ्ये] ।

(२) आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकात्
द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य ।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ? ॥

अश्व। [ सक्रोधं सकम्पञ्च कृपसूतौ दृष्ट्वा ] । किन्नामेदम् ?

---

भवभयात् शस्त्रकृतपराभवभयात्, तन्निवारणार्थमेव गृहीतम्, "आततायिनमायान्तं हन्यादेवाविचारयन्" इति "जिघांसन्तं जिघांसीयात्" इति च स्मृतौ आत्म-त्राणार्थमेव शस्त्रधारणं विहितमित्यत एव तद्धृतमित्यर्थः, यस्य प्रभावात् यद्धारणमाहात्म्यात्, तव न विषयः अगोचरः, कश्चिदपि नासीत्, अत्रापि पूर्ववत् न-शब्देन समासः, यतः यस्मात्, तेन त्वं परित्यक्तमतः कारणात् अहमपि त्वां विमोच्ये, ते स्वस्त्यस्तु भवत्कुशलमस्तु। शिखरिणी वृत्तम्।

(१) भारद्वाजस्य द्रोणस्य, असदृशं परिभवमयोग्य तिरस्कारं, केशाकर्षणरूपं, नृशंसेन पापेन धृष्टद्युम्नेन, प्रयुक्तं कृतं, कथमुपेक्षन्ते ? औदासीन्येन न प्रतिकुर्वन्ति ? इत्यर्थः।

(२) पलितेन जरसा शुक्लकेशेन, धवले मौलौ मस्तके, पाणिं न्यस्य याति, तत् सहध्वम् ? नेपथ्ये पूर्वोक्तस्य अर्थानित्यस्यावाप्यनुपपत्तात् कथं सहध्वम् ? इत्यर्थः। मन्दाक्रान्ता वृत्तम्।

(१) प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं व्रतमास्थितस्य।
तातस्य मे पलितमौलि [ * निरस्तकाशे ]
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ? ॥

कृप। वत्स ! एवं किल जनः कथयति।

अश्व। किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः ?।

सूत। [ सभयम् ]। कुमार ! आसीदयं तस्य तेजोराशेः देवस्य नवः परिभवावतारः।

अश्व। हा तात ! हा पुत्रप्रिय ! मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः। अथवा—

(२) परित्यक्ते देहे रणशिरसि शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत्।
स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपोः
ममैवायं पादः शिरसि निहितस्तस्य सहसा ॥

आः दुरात्मन् ! पाञ्चालापसद !

---

(१) *आत्तं गृहीतं, धनुर्यैस्तेषाम्, अनेन प्रतीकारक्षमत्वेऽपि प्रतीकाराकरणं मयुक्तमिति सूचितम्। प्रायेण बाहुल्येन, मरणार्थमुपवासाय उपवेशनं प्रायोपवेशनं, क्रियाराहित्येन च तत्सादृश्यम्। वसन्ततिलकं वृत्तम्।

(२) देहे परित्यक्ते परित्यक्तुमारब्धे, प्रायोपवेशन इव निश्चेष्टतया स्थित्वा देहत्यागाय सङ्कल्पकरणात् देहत्यागारम्भ इति बोध्यम्; स्फुरन्ति यानि दिव्यास्त्राणि तेषामोघः समूह एव, द्रविणं धनं, तेन यो मदस्तेन मत्तस्य कृत्याकृत्यविवेकशून्यस्य, शिरसि सहसा अयमुत्तोलितः, पादः निहितः निपातुं स्थितः, अथवा अयं भूमौ पादपातनेन तच्छिरसि पातनवत् कृत्वाऽभिनीतः। शिखरिणी वृत्तम्।

---

* [ निमीलिताक्षे ] क्वचिदित्येव पाठः

(१) तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्योत्तमाङ्गे।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ? ॥

अहो युधिष्ठिर ! युधिष्ठिर ! अजातशत्रो ! अमिथ्यावादिन् ! धर्मपुत्र ! सानुजस्य ते किमनेनापकृतम् ? अथवा किमनेन अलीकप्रकृतिजिह्मचेतसा। (२) अर्जुन ! सात्यके ! बाहुशालिन् ! वृकोदर ! माधव ! युक्तं नाम भवतां सुरासुरमनुजलोकैकधनुर्द्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्य्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेक्षितुम् ? अथवा सर्व एवैते पातकिनः, किमेतैः।

(३) कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनाम्
अयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥

---

(१) पाण्डूनां पाण्डुपुत्राणां, पाञ्चालानां पञ्चालजनपदराजानाम्, उभयत्र तद्राजार्थकतद्धितस्य बहुषु लुक्, सेना एव तूलानि, सुखनाश्यत्वात्, तेषामुत्क्षेपे उपमर्दने, प्रलयवायुः, असह्यवेगत्वात्। धृतधनुरित्यत्र समासान्तविधेरनित्यत्वादनङ्। मन्दाक्रान्ता वृत्तम्।

(२) अलीका असत्यप्रधाना, या प्रकृतिस्तया जिह्मं कुटिलं, चेतो यस्य तादृशेन, तथा च सत्यवादिताख्यापनं छलमात्रं, वितथवादिता तु तस्य स्वाभाविकी, कथमन्यथा गुरौ द्विजवरे चेदृशमसत्यवादिता स्यात् ? इति भावः।

(३) गुरुपातकं ब्रह्महत्यारूपं महापातकं, न्यस्तशस्त्रतया आततायित्वाभावेन तद्वधे ब्रह्महत्यापातकमवश्यं भवतीत्याशयः। मनुजाः पशव इव कृत्याकृत्यविवेकशून्यत्वात् तैः, पशुतुल्यनरैरित्यर्थः, निर्मर्य्यादैः सङ्ग्राममर्य्यादातिक्रान्तैः, न्यस्तशस्त्रस्य हनने हि युद्धशास्त्रे मर्य्यादातिक्रमः प्रसिद्धः, उदायुधैः उद्गतशस्त्रैः, भवद्भिः युष्माभिः शस्त्रधारिभिः निवारणं कर्त्तव्यं, तच्च न कृतं, प्रत्युतानुमतमित्यतो

कृप। वत्स ! किन्न सम्भाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति (१)।

अश्व। भो भोः पाण्डवमत्स्यसोमकमागधेयाः ! क्षत्रियापसदाः !

(२) पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम् ?।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे ?॥

सूत ! गच्छ, त्वं सर्वोपकरणैः साङ्ग्रामिकैः सर्वायुधैरुपेतं महाहवलक्षणं नामास्मत्स्यन्दनमुपनय।

सूत। यदाज्ञापयति कुमारः। [ इति निष्क्रान्तः ]।

कृप। वत्स ! अवश्यप्रतिकर्त्तव्येऽस्मिन् दारुणे परिभवाग्नौ सर्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्त्तुम् ?।

अश्व। किमतः परम् ?।

कृप। सेनापत्येऽभिषिक्तं भवन्तमिच्छामि समरभुवम् अवतारयितुम्।

अश्व। मातुल ! परतन्त्रमिदमकिञ्चित्करञ्च*।

---

ऽप्रीता एव पापभागिन इति भावः। नरकस्य भूमिपुत्रस्यासुरस्य अतिदुर्जयस्यापि, रिपुणा कंसद्वेषेण सार्द्धं, तथा सर्वेषाम्, अयं धृताश्चः, अहम् अद्याङ्ग रक्तानि, मेदांसि वपाः, मांसानि च तैः, दिशां दिग्देवतानां, बलिं करोमि ददामीत्यर्थः। हरिणी वृत्तं "नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात्।

(१) दिव्यास्त्राणां ब्रह्मास्त्रादीनां, ग्रामे समूहे, कोविदे दक्षे, भवति त्वयि।

(२) अरीणां रुधिराणामासारः धारया सम्पातः, स एव विघसं प्रीतिकरं यत्र तादृशं तत् पितृतर्पणरूपं कर्म, रणमुखे विधातुं किमद्य न प्रभवति ? न शक्नोति ? अपि तु समर्थ एव। अन्नभोजनार्थस्य विघसशब्दस्य तत्सदृशप्रीतिकरत्वे लाक्षणिकम्। शिखरिणी वृत्तम्। *

कृप । वत्स ! न खलु परतन्त्रं नाकिञ्चित्करञ्च । पश्य—

(१) भवेदभीष्मद्रोणं धृतराष्ट्रबलं कथम् ? ।
यदि तत्तुल्यकर्माऽत्र भवान् धुर्य्यो न युज्यते ? ॥

कृतपरिकरस्य (२) भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं, (३) किं पुनर्युधिष्ठिरबलम् ? तदेवं मन्ये, परिकल्पिताभिषेकोपकरणः कौरवराजो न चिरात्त्वामेवाभ्युदीक्षमाणः (४) तिष्ठतीति ।

अश्व । यद्येवं, त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतीकारजलावगाहनाय, तदहं गत्वा तातवधविषण्णमानसं कुरुपतिं सैनापत्यस्वयङ्ग्रहणप्रणयसमाश्वासनया मन्दसन्तापं करोमि ।

कृप । वत्स ! एवमिदम्, अतस्तमेवोद्देशं गच्छावः । [ इति परिक्रामतः ] ।

[ ततः प्रविशति कर्णदुर्य्योधनौ ] ।

दुर्य्यो । अङ्गराज !

(५) तेजस्वी रिपुहतबन्धुदुःखपारं
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्य्यः सुतनिधनं निशम्य सङ्ख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ? ॥

---

(१) तयोस्तुल्यं कर्म युद्धकर्म यस्य तादृशः, भवान् यदि धुर्य्यो भारवाहकतया, अत्र सैनापत्ये, न युज्यते न नियुज्यते, नाभिषिच्यते इत्यर्थः । "धुर्वह धुर्य्यधौरेय-धुरीणाः सधुरन्धर." इत्यमरः । पथ्यावक्त्रं वृत्तम् ।

(२) कृतपरिकरस्य कृतकटिबन्धनस्य, कृतसन्नाहस्येत्यर्थः ।

(३) परिपन्थीभवितुं विपक्षीभवितुं, विरुद्धमाचरितुमित्यर्थः ।

(४) अभ्युदीक्षमाणः प्रतीक्षमाणः ।

(५) रिपुणा हतस्य बान्धवस्य दुःखं तस्माज्जन्यशोकः, तदेव सिन्धुरित्यध्याहार्य्यम्,

अथवा सूक्तमिदमभियुक्तैः, प्रकृतिः (१) दुस्त्यजेति, यतः शोकान्धचेतसा तेन विमुच्य क्षत्रधर्मकार्कश्यं द्विजातिसुलभो मार्दवपरिग्रहः कृतः।

कर्ण। राजन्! कौरवेश्वर! न खल्विदमेवम्।

दुर्य्यो। कथं तर्हि?।

कर्ण। एवं किल द्रोणस्याभिप्राय आसीत् यथा, अश्वत्थामा मया पृथिवीराज्ये अभिषेक्तव्य इति; तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य (२) वृथा शस्त्रग्रहणमिति तथा कृतवान्।

दुर्य्यो। [सशिरःकम्पम्]। एवमिदम्?।

कर्ण। एतदर्थञ्च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्परक्षयमुपेक्षमाणेन (३) तेन प्रधानपुरुषवधे (४) उपेक्षा कृता।

दुर्य्यो। उपपन्नमिदम्।

---

अन्यथा पारोडुपान्वयाऽसम्भवात्; तस्य पारं, धृतः आयुधान्येव प्लवः उडुपः, नदीसन्तरणसाधनं "भेला" इति प्रसिद्धं याभ्यां ताभ्यां, बाहुभ्यां व्रजति, बाहुबलेनैव अपकर्त्तृशत्रोः प्रतीकारं कृत्वा दुःखं मन्दीकरोतीत्यर्थः। "उडुपस्तु प्लवः कोलः" इत्यमरः। प्रहर्षिणी वृत्तम्।

(१) सूक्तं सुष्ठु उक्तम्। अभियुक्तैः मान्यैः। प्रकृतिः स्वभावः।

(२) ब्राह्मणस्येति सम्बन्धे षष्ठी न कर्त्तरि, "उभयप्राप्तौ कर्मणि" (२। ३। ६६ पा० सू०) कर्मण्येव षष्ठीनियमनात्, तेन शस्त्रग्रहणमित्यत्र षष्ठ्या समासः सूपपादः, "उभयप्राप्तौ कर्मण्येव विहितः षष्ठ्या कर्मणि च" (२। २। १४ पा० सू०) इति समासनिषेधात्।

(३) कौरवपाण्डवपक्षपातेन तदानुकूल्येन, प्रवृत्तः महासङ्ग्रामो यस्य तस्य, राजकस्य राजसमूहस्य, परस्परक्षयः परस्परेण क्षयो नाशस्तम्, उपेक्षमाणेन औदासीन्येनाप्रतिकुर्वता, तथा च एवं परस्परक्षयेणावशिष्टानां स्वयं जयेन स्वाराज्यसिद्धिर्भविष्यतीति द्रोणाशय इति उद्भावितम्।

(४) प्रधानपुरुषवधे प्रधानस्य पुरुषस्य जयद्रथस्य इत्यर्थः, वधे।

कर्ण। अन्यच्च राजन्! द्रुपदेन चास्य बाल्यात् प्रभृति अभिप्रायवेदिना न स्वराष्ट्रे वासो दत्तः।

दुर्यो। साधु अङ्गराज! निपुणमभिहितम।

कर्ण। न चायं ममैकस्याभिप्रायः, अन्येऽभियुक्ता अपि नवेदमन्यथा मन्यन्ते।

दुर्यो। एवमेतत्, कः सन्देहः।

(१) दत्त्वाऽभयं सोऽतिरथो बध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत् कथमन्यथा?॥

कृप। [ विलोक्य ]। वत्स! एष दुर्योधनः सूतपुत्रेण सह अस्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति, तदुपसर्पावः। [ तथा कृत्वा ]।

उभौ। विजयतां विजयतां राजन्।।

दुर्यो। [दृष्ट्वा]। अये! कथं कृपाऽश्वत्थामा च!!। [आसनादवतीर्य्य ]। गुरो! अभिवादये। [ अश्वत्थामानं प्रति ]। आचार्य्यपुत्र!—

(२) एह्यस्मदर्थहततात! परिष्वजस्व
कान्तैरिद मम निरन्तरमङ्गमङ्गैः।
स्पर्शस्तवैव भुजयोः सदृशः पितुस्ते
शोकेऽपि नो विकृतिमेति तनूरुहेषु॥

---

(१) अतिरथो महारथः। एवं त्वदुक्तप्रकारस्य यद्यभिसन्धिः न स्यात्तदा कथमुपेयात?। अतिरथ इति विशेषणेन च तस्य सामर्थ्येऽपि उपेक्षा प्रागुक्ताभिसन्धिसूचिकेति दर्शितम्। पथ्यावक्त्रं वृत्तम्।

(२) शोऽस्याकः, तनूरुहेषु लोमसु, विकृतिं हर्षोद्गमम्, रोमाञ्चमिति यावत्, शोकेऽपीत्यनेन शोकाप्रतिबद्धताकथनेनात्यन्तानन्दहेतुत्वं सूचितम्। वसन्ततिलकं वृत्तम्।

[ आलिङ्ग्य पार्श्वे उपवेशयति ]।

अश्व। [ बाष्पमुत्सृजति ]।

कर्ण। द्रौणायने! (१) अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम्।

दुर्यो। आचार्य्यपुत्र! को विशेष आवयोरस्मिन् व्यसनार्णवे?। पश्य—

(२) तातस्तव प्रणयवान् स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि।
किं तस्य देहनिधने कथयामि दुःखम्?
जानीहि तद्गुरुशुचा मनसा त्वमेव॥

कृप। वत्स! यथाऽऽह कुरुपतिस्तथैवैतत्।

अश्व। राजन्! एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्त्तुं, किन्तु—

मयि जीवति मत्तातः केशग्रहमवाप्तवान्।
कथमन्ये करिष्यन्ति पुत्रेभ्यः (३) पुत्रिणः स्पृहाम्?॥

कर्ण। द्रौणायने! किमत्र क्रियते? यदा तेनैव सर्वपरिभवत्राणहेतुना शस्त्रमुत्सृजतैतादृशीमवस्थामात्मा नीतः।

---

(१) द्रोणस्यापत्यं पुमान् द्रौणायनिः तत्सम्बुद्धौ।

(२) मम पितुः प्रणयवान् स्नेहवान्, सखा मित्रं, तेन पितृस्थानीयत्वं सूचितम्। तेन तातवधेन, गुर्वी गुरुः शोको यस्य तादृशेन, मनसा त्वं जानीहि, परदुःखस्यान्येन प्रत्यक्षयितुमशक्यत्वात् यादृशं शोकवत्त्वमात्मनोऽनुभवसि, तादृशं ममाप्यनुमिनु इति भावः। वसन्ततिलकं वृत्तम्।

(३) पुत्रेभ्य इत्यत्र "स्पृहेरीप्सितः—" (१।४।३६ पा० सूत्रेण) सम्प्रदाने चतुर्थी। विद्यमानेन पुत्रेण स्वापमानस्याप्रतीकारे पुत्रिणः पुत्रोत्पादनव्यापारवन्तः। अपुत्रिण इति पाठस्तु समीचीनस्तेन पुत्रवतः पुत्रस्य निष्फलतया चित्ते इच्छाविरहस्य यौक्तिकतया तव स्पृहाभावः किन्तु एवेति कथमित्युक्तिर्नोपपन्नतेति बोध्यम्। पथ्यावक्त्रं वृत्तम्।

अश्व ! अङ्गराज ! किमाह भवान् ? किमत्र क्रियते इति ? श्रूयतां यत् क्रियते—

(१) यो यः शस्त्रं बिभर्ति स्वभुजगुरुबलः पाण्डवीनां चमूनां
सो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥

अपि च, भो जामदग्न्यशिष्य ! (२) कर्ण !—

(३) देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥

---

(१) स्वभुजा एव गुरु बलं यस्य बाहुबलसहाय इत्यर्थः । पाञ्चालगोत्रे पञ्चालजनपदराजगोत्रे, निर्धारणे सप्तमी, "इन्द्र सामासिकस्य च" इतिवत् एकत्वेऽपि कोषवत् तथा, साधुतायां इष्टत्वात्, अथवा गोत्रस्य गोत्रप्रवर्तकापत्यवर्गस्यावयवाः समूहादिशब्दवत् एकत्वेऽप्यवृत्त्वात् निर्धारणषष्ठीसम्पादनम् । अधिकवया वृद्धश्च, पूर्वं शिशुरित्युक्तत्वादधिकवयस्क एवाभिमत, गर्भं शय्येव तां गतः गर्भस्थ इत्यर्थः, तत्कर्मणि द्रोणपराभवकर्मणि, साक्षी साक्षात् द्रष्टा, प्रतीकाराद्युद्यताभावेन उदासीन इव स्थित इत्यर्थः । प्रतीपः प्रतिकूलाचारो, प्रतिद्वन्द्वी इत्यर्थः । जगतामशेषाणाम्, अन्तकस्यापि सकललोकोच्छेदनसमर्थस्यापि, तस्य तस्याहमन्तकः नाशक, अन्तं करोतीति णिचि ण्वुलि सिद्धम् । इह उदाहरणनामको मुखसन्धिः, "उदाहरणम् उत्कर्षयुक्तं वचनमुच्यते" इति दर्पणे । स्रग्धरा वृत्तम् ।

(२) जामदग्न्यकृतस्य पितृपराभवहेतुकक्षत्रियवधस्य स्मारणाय जामदग्न्यशिष्येति सम्बोधनम् ।

(३) सः पुराणादौ श्रुतः, अयं प्रत्यक्षः कुरुक्षेत्ररूपो देशः, यस्मिन् यदेकदेशे समन्तपञ्चकनामके, ह्रदाः जलाशयाः, अरातीनां पितृवधकर्तॄणां क्षत्रियाणां, शोणितानि जलानीव तैः पूरिताः, सरैरिति पाठे—शोणितोदधिभिरिति व्याख्येयम् । क्षत्रा-

दुर्य्यो। आचार्य्यपुत्र! तस्य तथाविधस्याननन्यसाधारणस्य ते वीरभावस्य किमन्यत् सदृशम्?।

कृप। राजन्! सुमहान् खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभारः, तदहमेवं मन्ये, भवता कृतपरिकरोऽयमुत्क्षेप्तुं लोकत्रयमपि समर्थः, किं पुनर्युधिष्ठिरबलम्? अतोऽभिषिच्यतां सैनापत्ये।

दुर्य्यो। सुष्ठु युज्यमानमभिहितं युष्माभिः, किन्तु प्राक् प्रतिपन्नोऽयमर्थोऽङ्गराजस्य।

कृप। राजन्! असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम्, अस्यापि च तदेवारिकुलमनुशासनीयम्, अतः किमस्य पीडा न भविष्यति?।

अश्व। राजन्! कौरवेश्वर! किमद्यापि युक्तायुक्तविचारणया?।

(१) प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम्
अकेशवमपाण्डवं भुवनमद्य निःसोमकम्।

---

दैव तथाविधः पुराणादौ श्रुतः, जामदग्न्यपितृपराभवप्रकारः पराभवः, केशग्रहणपूर्वकवधः, तान्येव जामदग्न्यादधिगतवतस्तातात् प्राप्तवान्, अहितानां शत्रूणां, लब्धच्छिद्राणां, अस्त्राणां घस्मराणि भक्षकाणि, विनाशकानीत्यर्थः, अत एव गर्ह्याणि। अत्राख्याननामालङ्कारः, "आख्यानं पूर्ववृत्तोक्तिः" इति दर्पणोक्तेः। जामदग्न्यकृतपितृहन्तृहैहयवधकथा च महाभारते आदिपर्वणि २ अध्याये "स सर्वं क्षत्रमुत्साद्य स्ववीर्य्येणानलद्युतिः। समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान्॥" इति "समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः" इति च। तथा तत्रैव सम्भवपर्वणि १०८ अध्याये "जामदग्न्येन रामेण पितृवधममृष्यता। राजा परशुना पूर्वं हैहयाधिपतिर्हतः॥" इति च अनुसन्धेया। शार्दूलविक्रीडितं वृत्तम्।

(१) शेषे स्वप्स्यसि, भविष्यत्सामीप्ये लट्, समरविस्ताराहित्येन

इयं परिसमाप्यते रणकथाऽद्य दोःशालिना
व्यपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥

कर्ण। द्रोणात्मज ! वक्तुं सुकरमिदमध्यवसितुं दुष्करं, बहवः कौरवबले अस्य कर्मणः शक्ताः ।

अश्व। अङ्गराज ! एवं बहवः कौरवबले शक्ताः, किन्तु दुःखोपहतः शोकावेगवशात् ब्रवीमि, न पुनर्वीरजनाधिक्षेपेण ।

कर्ण। मूढ़ ! दुःखितस्याश्रुपातः, कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणमुचितं, नैवंविधाः प्रलापाः ।

अश्व। [ सक्रोधम् ]। अरे रे राधागर्भभारभूत ! सूतापसद ! किमेवमाक्षिपसि !! (१)।

कर्ण। (२) सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥

---

स्वाच्छन्द्यात् निद्राधिक्यं प्राप्तवतीत्यर्थः, अत एव स्तुतिभिः वन्दिनां स्तवनैः, प्रयत्नेन प्रयत्नाधिक्येन, गाढनिद्रस्य प्रबोधने प्रयत्नाधिक्यमुचितमेवेति भावः, परिबोधितः निद्राभङ्गं प्रापितः, निशामिति अत्यन्तसंयोगे द्वितीया, समस्तां निशां व्याप्येत्यर्थः, तेन तृतीयप्रहरे मन्त्रणार्थं निद्राभङ्गो नापेक्षित इति सूचितम्। गाढनिद्राप्राप्तौ हेतुमाह, रणकथेति चिन्तनपुरःसररणकर्तव्यकार्य्यविचारणार्थं मन्त्ररूपा कथा। दोःशालिना दोर्भ्यां प्रशस्तबलत्वेन शालते श्लाघते इति दोःशाली, बाहुबलवतेत्यर्थः। परिसमाप्यते समूलं निवार्य्यते ; तत्र हेतुः अकेशवमित्यादि, केशवस्य तेषां प्रधानसहायत्वात् तस्य प्राक् निर्देशः। निःसोमकं सोमकवंशरहितं, तेन सात्यकिप्रभृतीनां तत्सहायानामपि नाशनमुक्तम्। भुवो भारहरणार्थमागतस्य केशवस्य वधे तत्र आर्दित देवानामभीष्टसिद्धव्याघात इत्याशङ्क्य तदपि स्वयमेव कार्य्यमित्याह, नृपेत्यादि. नृपा एव काननानि तैरतिगुरुः। पृथ्वी वृत्तम्।

(१) सूतापसद ! सूताधम ।। आक्षिपसि तिरस्करोषि।

(२) कुले सत्कुले, जन्म दैवायत्तं भाग्याधीनं, जात्यायुर्भोगानां कर्मविपाक-

अश्व। किमाह भवान्? ममापि नामाश्वत्थाम्नो दुःखितस्य अश्रुभिः प्रतिक्रियामुपदिशसि, न शस्त्रेण?। पश्य—

(१) निर्वीर्य्यं गुरुशापभाषितवशात् किं मे तवेवायुधम्?
सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा?।
जातोऽहं स्तुतिवंशकीर्त्तनविदां किं सारथीनां कुले?
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्रेण नास्त्रेण किम्?॥

कर्ण। [सक्रोधम्]। अरे रे वाचाट! वृथाशस्त्रग्रहण-दुर्विदग्ध! वटो!—

निर्वीर्य्यं वा सवीर्य्यं वा मया नोत्सृष्टमायुधम्।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना॥

अश्व। [सक्रोधम्]। अरे रे रथकारकुलकलङ्क! राधागर्भ-भारभूत! आयुधानभिज्ञ! तातमप्यधिक्षिपसि!! अथवा—

---

तथैव शास्त्रे उक्तत्वात्; पौरुषे विक्रमः, मदायत्तं न भाग्यायत्तमित्यर्थः। पथ्यावक्त्रं वृत्तम्।

(१) गुरोः परशुरामस्य, शापभाषितं शापोक्तिः, "सूतोपधावाप्तमिदं तवास्त्रं न कर्मकाले प्रतिभास्यति त्वाम्" इत्युक्तरूपा, तद्वशात् तदायत्तत्वात्, किं निर्वीर्य्यम्? प्रभावरहितम्? तच्छापाख्यायिकाऽपि तस्य, सा च कथा महाभारते कर्णपर्वणि ४२ अध्यायेऽनुसन्धेया, निजशिष्यात् क्षत्रियात् पराजयं प्राप्य क्षत्रियाय विद्या न देयेति प्रतिज्ञावतः परशुरामस्य समीपे ब्राह्मणत्वेनात्मानं प्रख्याप्य कर्णेन विद्याऽधिगता, तत्समये च एकस्मिन् दिवसे कर्णोरूपधानं कृत्वा सुप्ते रामे कृकलास-रूपिणेन्द्रेण तदूरुभेदनेन रुधिरस्य प्रसारणेऽपि गुरोर्निद्राभङ्गभियाऽचलतया स्थितस्य कर्णस्य प्रबुद्धगुरुणा तद्दर्शनेन भेदनसहत्वगुणेन क्षत्रियत्वं निर्द्धार्य्य मिथ्या-कथनेन विद्यामधिगम्यतः कर्णस्य, विद्या ते कर्मकाले विफला भविष्यतीति प्रागुक्तशापो दत्त इत्येवरूपा। क्षुद्रः खलः, अनायाससाध्यः, योऽरातिस्तेन कृतम-प्रियमनिष्टं, किमस्रेण अश्रुजलेन, प्रतिकरोमि? अस्त्रेण किं न? भवत इव मम शापरहितत्वेनास्त्राणामवीर्य्यत्वाभावात् अभीष्टसाधकास्त्रेणैव तत् प्रतिकरोमीति भावः। शार्दूलविक्रीडितं वृत्तम्।

(१) स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो! क्व नु तदा?॥

कर्ण। [विहस्य]। एवं भीरुरहं, त्वं पुनर्विक्रमैकरसः, तव पितरमनुस्मृत्य महान् मे संशयो (२) जातः। अपि च, अरे मूढ़!—

(३) यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान्?।
यदनेन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसन्निधौ॥

अश्व। [सक्रोधं सकम्पञ्च]। दुरात्मन्! राजवल्लभप्रगल्भ! सूतापसद! असम्बद्धप्रलापिन्!

---

(१) इयं वसुधा तद्वेत्ति बहूनां राज्ञां वधात् क्रमेण भूमेर्भारोऽपहृत इत्यतो भूमिः भारलाघवेनैव जानातीत्यर्थः, अथवा वसुधापदेन तत्स्था लोका लक्ष्यन्ते, ते च प्रतिदिनलोकक्षयदर्शनात् तत् कर्म जानन्ति, न तु भवान्, तदा तव ततः पलायनादिति भावः, शस्त्रत्यागे च यत् कारणं तत् पृथासूनुर्वेत्ति, हे रणभीरो! तदा तस्मिन् समये, त्वं क्व? तत्र नैव स्थितः, तत् कथं तत्त्यागहेतुपरिज्ञानं ते स्यात्? इत्याशयः। शिखरिणी वृत्तम्।

(२) अश्वत्थामोक्तमात्मनो भीरुत्वं प्रौढ्याऽभ्युपेत्य तस्य विक्रमप्रधानतया व्याजेन संस्तुत्य तस्य दुष्टकर्म दर्शयितुमसमर्थतया तत्पितुर्वक्ष्यमाणकर्म दुष्टतया उद्भाव्य तं निन्दति, तव पितरमिति, पितुः वक्ष्यमाणकर्म कुर्वाणमित्यर्थः। संशयः निवारणासामर्थ्येन भयेन शोकेन वा उदासितमित्येवंरूपः सन्देहः।

(३) वीरैः शस्त्रमुज्झितं त्यक्तं, तथाऽपि किमशस्त्रपाणयोऽपि बाहुबलेनापि, उदायुधान् उद्धृतास्त्रान्, अरीन् न निवारयन्ति? अपि तु निवारयन्त्येव, तदनिवारणेन राजसमूहसन्निधौ स्त्रियेव भीतेन कातरेण असमर्थेन वा यदुदासितं तत् किंहेतुकम्? इति संशयः, तथा च बाहुबलमाश्रित्याऽवश्यमेव निवारयेदतस्तस्य बाहुबलं

(१) कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम्॥

[इति तथा कर्तुमुत्तिष्ठति]।

[कृपदुर्योधनौ]। गुरुपुत्र! मर्षय मर्षय। [इति निवारयतः]।

अश्व। [चरणप्रहारं नाटयति]।

कर्ण। [सक्रोधमुत्थाय खड्गमाकृष्य]। अरे दुरात्मन्! ब्रह्मबन्धो! आत्मश्लाघिन्!—

(२) जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम्।
अनेन लूनं खड्गेन पतितं वेत्स्यसि क्षितौ॥

अश्व। अरे मूढ! जात्या चेदवध्योऽहम् इयं सा जातिः परित्यक्ता। [इति यज्ञोपवीतं छिनत्ति। पुनश्च सक्रोधम्]।

(३) अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम्॥

---

नासीदिति भावः, एतेनात्मनो गुरुशापेनास्त्रवीर्याभावेऽपि बाहुबलशालित्वं सूचितम्। मञ्जुभाषिणी वृत्तं, "सजसा जगौ च यदि मञ्जुभाषिणी" इति तल्लक्षणात्।

(१) आत्मनो भुजबलसूचनेन गर्वितं कर्णं प्रति तदुक्तवाक्यस्योत्तरं ददत् तदपमानसूचकं वामपादनिक्षेपमभिनयन्नाह, भुजबलेन यो दर्पस्तेन आध्मायमानस्य विकत्थमानस्य, तव शिरसि एषः अयमुत्तोलितः, वामः पुंसः स एवातीवापकृष्टः, न तु दक्षिणः, पादो निक्षिप्यते, वारयस्तु नैवेत्यर्थः। मालिनी वृत्तम्।

(२) जात्या ब्राह्मण्येन, कामं तावत्, अवध्यः, न चेत् खड्गेन बध्यसे इत्यर्थः, अतो येनाङ्गेनापराद्धोऽसि तदङ्गमेव छिद्यते इत्याह, उद्धृतमिदं चरणं खड्गेन लूनं क्षितौ पतितमेव वेत्स्यसि, नादौ, लघुहस्तत्वात् भवतोऽप्रतिकार्यत्वाच्च तच्छेदनेऽपि न प्रतिषेधो भविष्यतीत्याशयः। पथ्यावक्त्रं वृत्तम्।

(३) किरीटी अर्जुनः, मिथ्याप्रतिज्ञः विफलीभूता तव वधरूपा प्रतिज्ञा यस्य

[ उभावपि खड्गमाकृष्य अन्योऽन्यं प्रहर्तुमुद्यतौ, कृपदुर्य्योधनौ निवारयतः ]।

दुर्य्यो। आचार्य्यपुत्र! शस्त्रग्रहणेनालम्।

कृप। वत्स! सूतपुत्र! शस्त्रग्रहणेनालम्।

अश्व। मातुल! मातुल! किं निवारयसि? अयमपि तात-निन्दाप्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव (१)।

कर्ण। राजन्! न खल्वहं निवारयितव्यः।

(२) उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना॥

अश्व। राजन्! मुञ्च मुञ्चैनम्, आसादयतु मद्भुजान्तरनिष्पेष-सुलभमसूनामवसादनम्। अन्यच्च, राजन्! स्नेहेन कार्य्येण वा त्वमेनं ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि, तदुभयमपि वृथैव (३)। पश्य—

(४) पापप्रियस्तव कथं गुणिनः सहायः
सूतात्मजः शशधरान्वयसम्भवस्य?।
हत्वा किरीटिनमयं नृप! मुञ्च कुर्य्यां
क्रोधादकर्णमपृथात्मजमद्य लोकम्॥

[ इति प्रहर्तुमिच्छति ]।

---

तथा म्रियते, तव वधेन तस्य प्रतिज्ञायाः वैफल्यं सम्पाद्यते इति भावः। शस्त्रं युद्धार्थं, गृहाण, अथवा शस्त्रं त्यक्त्वा मौलौ अञ्जलिं विनयाञ्जलिं, रचय, नो चेत् वध्य इत्याशयः। पथ्यावक्त्रं वृत्तम्।

(१) धृष्टद्युम्नपक्षपाती तत्स्थानीयः, तातनिन्दकत्वात्।

(२) धीरसत्त्वैः धीरप्रकृतिभिः, अवज्ञया उपेक्षितानां मन्दानां स्वल्पबलानामपि, एषा एवंविधा, विकत्थना आत्मश्लाघा, भवति, ततोऽयं क्षमणीय इति भावः। पथ्यावक्त्रं वृत्तम्।

(३) एतद्विषयः स्नेहः एतत्कृतकार्य्यानुरोधित्वञ्चेत्युभयमपि वृथा निष्फलम्।

(४) आदौ असहत्वादर्शितम् स्नेह एव तवानुचित इत्युक्त्वा पश्चात् कार्य्यानु-रोधित्वमपि निरस्यति। अकर्णमपृथात्मजम्, एतेन चिकीर्षितपृथाऽऽत्मजवधस्य सकेन

कर्ण । [ खड्गमुद्यम्य ] । अरे वाचाट ! ब्राह्मणाधम ! एवं म भवसि ? । राजन् ! मुञ्च मुञ्च, न खल्वहं वारयितव्यः । [इति हन्तुमिच्छति ] ।

दुर्य्यो । कर्ण ! गुरुपुत्र ! कोऽयमद्य युवयोर्व्यामोहः ? (१) ।

कृप । वत्स ! अन्यदेव प्रस्तुतमन्यत्रावेग इति कोऽयं व्यामोहः ? स्वबलव्यसनं चेदमस्मिन् काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः (२) ।

अश्व । मातुल ! न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम् ? ।

कृप । वत्स ! अकालः खलु स्वबलप्रधानविरोधस्य ।

अश्व । मातुल ! यद्येवम्—

(३) अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत् प्रियमपि मयाऽस्त्रं रणमुखे ।
बलानां नाथेऽस्मिन् परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखममुं वेत्तु समरे ॥

[ इति खड्गमुत्सृजति ] ।

---

सम्पादनीयतया तदर्थमेतदनुरोधो भवेति यत् प्रागुक्तं तत् समर्थितमिति बोध्यम् । वसन्ततिलकं वृत्तम् ।

(१) व्यामोहः विभ्रमेव मूढता, वैपरीत्याचरणमित्यर्थः ।

(२) अन्यदेव पाण्डवादिहननादि, प्रस्तुतं चिकीर्षितम्, अन्यत्र स्वबलविरोधे एव, आवेगः आसक्तिः ; अस्मिन् समये स्वबलयोः परस्परविरोधरूप यत् व्यसनं तत् युष्मत्तः भवतः, भवतीति पन्थाः उपायः, वामः प्रतिकूलः ।

(३) अस्मिन् कर्णे, सेनापतौ सति परिकुपितभीमार्जुनभये जाते अमुं प्रियसखं कर्णं, तदा वेत्तु पश्चात्तापेन अनिष्टवारणाय वा जानातु । शिखरिणी वृत्तम् ।

कर्णः [ विहस्य ]। अपरित्यक्तमपि भवादृशैरायुधं ननु चिरपरित्यक्तमेव निष्फलत्वात् ।

(१) धृतायुधो यावदहं तावदन्यैः किमायुधैः ?।
यद्वा न सिद्धमस्त्रेण मम तत् केन सेत्स्यति ? ॥

[ नेपथ्ये ]। आः दुरात्मन्! द्रौपदीकेशाम्बराकर्षणमहापातकिन्! धार्त्तराष्ट्रापसद! चिरस्य खलु कालस्य मत्सम्मुखमागतोऽसि। अरे क्षुद्रपशो! क्वेदानीं गम्यते ?। अपि च, भो भो राधेयदुर्य्योधनसौबलप्रभृतयः पाण्डवविद्वेषिणश्चापपाणयो मानधनाः! शृण्वन्तु भवन्तः।

(२) स्पृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः! ॥

[ सर्वे आकर्णयन्ति ]।

अश्व। अङ्गराज! सेनापते! जामदग्न्यशिष्य! द्रोणोपहासिन्! भुजबलपरिरक्षितसकललोक। (३) [ धृतायुध इति पठित्वा ]। इदं तदासन्नतरमेव संवृत्तं, रक्षेनं साम्प्रतं भीमात् दुःशासनम्।

---

(१) यावदहं धृतायुधस्तावदन्यैरप्रहृते', आयुधैः किं प्रयोजनम ? यन्ममास्त्रेण न सिद्धं तदन्यास्त्रेण कथं सेत्स्यति ? अपि तु नैवेत्यर्थः। पथ्यावक्त्रं वृत्तम्।

(२) ना पशुरिव अज्ञत्वस्य परस्त्रीधर्षणस्य कारकत्वात्, राज्ञां गुरूणाञ्च भीष्मादीनां, पुरोऽग्रे, परिधानं वस्त्रम्, अपहृतं, गुरुसन्निधाने व्रीडाकरकार्य्यकरणमत्यन्तानुचितमिति भावः। भुजौ पञ्जरमिव बन्धनहेतुत्वात्, तत्र निपतितः प्राप्तः। हे कौरवाः! संरक्ष्यतामिति साहङ्कारोक्तिरेषा। शार्दूलविक्रीडितं वृत्तम्।

(३) जामदग्न्यशिष्यत्वेन स्पर्द्धमानः द्रोणमधिक्षिपसीति द्योतयन् क्रमेण

कर्ण। आः! का शक्तिर्वृकोदरस्य मयि जीवति युवराजस्य छायामप्याक्रमितुम्। युवराज! न भेतव्यं न भेतव्यम्, अयमहमागतोऽस्मि। [ इति निष्क्रान्तः ]।

अश्व। राजन्! कौरवनाथ! अभोष्मद्रोणं सम्प्रति कौरवबलमालोडयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्यते निवारयितुम्, अतः स्वयमेव भ्रातुः प्रतीकारपरो भव।

दुर्यो। आः! का शक्तिः दुरात्मनः पवनतनयस्यान्यस्य वा मयि जीवति शस्त्रपाणौ वत्सस्य छायामप्याक्रमितुम्। वत्स! न भेतव्यं न भेतव्यम्। कः कोऽत्र भोः! रथमुपनय। [ इति निष्क्रान्तः ]।

[ नेपथ्ये कलकलः ]।

अश्व। [ अग्रतो विलोक्य ]। मातुल! हा धिक्! कष्टम्। एष खलु भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्योधनराधेयौ शरवर्षैर्दुर्वारैरभिद्रवति। हा कष्टम्!! सर्वथा पीतं दुःशासनशोणितं भीमेन; न खलु विषह्य दुर्योधनानुजस्यैनां विपत्तिमवलोकयितुम्, अनृतमनुमतं नाम, मातुल! शस्त्रं शस्त्रम्।

(१) सत्यादप्यनृतं श्रेयो धिक्। स्वर्गं नरकोऽस्तु मे।
भीमात् दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम्॥

[ इति खड्गं गृहीतुमिच्छति ]।

---

सम्बोधनद्वयम्। सेनापते इत्यनेन असमर्थस्य भवतस्तत्कर्मण्यभिषेकादयोग्यपदप्राप्तत्वेन गर्वितत्वं द्योतितम्। भुजबलेत्यादिविशेषणं धृतायुध इत्यादिना यदात्मनो गुणश्लाघा कृता, तस्या अयथातथ्यद्योतकोपहासपरम्।

(१) शस्त्रपरित्यागः प्रतिज्ञातः, तस्य भङ्गेऽसत्यमाशङ्क्य असत्यकार्य्यनरकमपेक्ष्य दुःशासनवधजन्यदुःखमधिकं मन्यमान आह, सत्यादप्यनृतमिति। त्यक्तं कृतया प्रतिज्ञया मुक्तम्, आयुधं दुःशासनं भीमाद्रक्षितुमत्यक्तं पुनर्गृहीतमस्तु इत्यर्थः। पथ्यावक्त्रं वृत्तम्।

[ नेपथ्ये ]। महात्मन्! भारद्वाजसूनो! न खलु सत्यवचनम् अनुल्लङ्घितपूर्वमुल्लङ्घयितुमर्हसि।

कृप। वत्स! अशरीरिणी वाणी भवन्तमनृतादभिरक्षति।

अश्व। कथमियममानुषी वाक् नानुमनुते सङ्ग्रामावतरणं मे!! भोः! कष्टम्!! आः! पक्षपातिनो देवा अपि पाण्डवानाम्!! सर्वथा पीतं दुःशासनशोणितं भीमेन। भोः! कष्टम्!!

(१) दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम्।
दुर्य्योधनस्य कर्त्तास्मि किमन्यत् प्रियमाहवे?॥

मातुल! राधेयक्रोधवशादनार्य्यमस्माभिराचरितम्, अतस्त्वमपि तावदस्य राज्ञः पार्श्वपरिवर्त्ती भव।

कृप। गच्छाम्यहमत्र प्रतिविधातुं, भवानपि शिबिरसन्निवेशमेव प्रतिष्ठताम्।

[ उभौ परिक्रम्य निष्क्रान्तौ ]।

इति तृतीयोऽङ्कः।

(१) दुःशासनस्येति।—दुःशासनस्य रुधिरे रक्ते, पीयमानेऽपि, भीमेनेति शेषः, उदासितम् औदासीन्यमवलम्बितम्, न किमपि कृतमित्यर्थः, आहवे युद्धे दुर्य्योधनस्य अन्यत् अपरं, किं प्रियं कर्त्तास्मि? करिष्यामि? एतादृशभ्रातृरक्षणादन्यस्य प्रियकार्य्यस्यासम्भवादिति भावः। पथ्यावक्त्रं वृत्तम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वेणीसंहारनाटकव्याख्याने अश्वत्थामनामकतृतीयाङ्कव्याख्या।

# चतुर्थोऽङ्कः ।

[ ततः प्रविशति प्रहारमूर्च्छितं रथस्थं दुर्योधनमपहरन् सूतः ] ।

सूतः । [ ससम्भ्रमं परिक्रामति ] ।

[ नेपथ्ये ] । भो भो बाहुबलावलेपप्रवर्त्तितमहासमरदोहदाः कौरवपक्षपातपणीकृतप्राणद्रविणसञ्चयाः (१) नरपतयः ! संस्तभ्यन्तां, दुःशासनपीतावशेषशोणितस्नापितबीभत्सवेषवृकोदरदर्शनविषादपरिस्खलत्प्रहरणानि रणात् प्रद्रवन्ति बलानि ।

सूतः । [ विलोक्य ] । कथमेष पवनचलपक्षचामरचुम्बितकनककमण्डलुना शिखरावनद्धवैजयन्तीसूचितेन हतगजवाजिनरकलेवरसहस्रसम्मर्दोच्छलितशोणितकृतकलङ्ककिङ्किणीजालमालिना रथेन शरवर्षस्तम्भितपरबलपराक्रमप्रद्रुतमात्मजनमाश्वासयन् कृपः किरीटिनाऽभियुक्तमङ्गराजमनुसरति । हन्त ! जातमस्मद्बलानामवलम्बनम् ।

[ नेपथ्ये कलकलानन्तरम् ] ।

भीमः । भो भो अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः ! पाण्डवपक्षपातिनश्च योधाः ! न भेतव्यं न भेतव्यम्, अयमहं निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतो रभसगामी (२) स्तोकावशिष्टप्रतिज्ञा-

---

(१) कौरवपक्षपातेन तत्स्नेहेन, तत्साहाय्येन, तदर्थमिति यावत्, पणीकृतः प्राण एव द्रविणसञ्चयो यैः, यथा द्यूतादौ द्रविणसञ्चयः पणीक्रियते एवं रणद्यूते तैः प्राण एव पणीकृत इत्यर्थः ।

(२) रभसगामी त्वरितगतिः, उद्धतगमन इति यावत् ।

महोत्सवः (१) कौरवराजस्य द्यूतनिर्जितो दासः (२) पार्थ-मध्यमो भीमसेनः सर्वान् भवतः साक्षीकरोमि, श्रूयताम्—

(३) राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य च तथा कर्णस्य शल्यस्य च ।
पीतं तस्य मयाऽद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृक् वक्षसः ॥

सूत । [ श्रुत्वा सभयम् ] । अये ! आसन्न एष दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतः, अनुपलब्धसंज्ञश्च (४) तावदेव महाराजः, भवतु, सुदूरमपनयामि स्यन्दनं, कदाचित् दुःशासन इवास्मिन्नप्यनार्य्योऽनार्य्यमाचरिष्यति । [ त्वरितं परिक्रम्यावलोक्य च ] । अये ! अयमसौ सरसीसरोजविलोलनशीतलसुरभिमातरिश्वसंवाहितसान्द्रकिसलयो (५) न्यग्रोध-

---

(१) स्तोकं स्वल्पम्, अवशिष्टा दुर्योधनादिभङ्गरूपा या प्रतिज्ञा तया महोत्सवो यस्य, प्रतिज्ञायाः स्वल्पावशिष्टत्वात् जातानन्दसन्दोह इत्यर्थः ।

(२) द्यूतेन निर्जितः अत एव दासः दासत्वेन पूर्वमुपहसित इत्युक्त्या च अपकारस्मारणम् । अथमित्यनेन दुःशासनोरःस्थलक्षतजासवपानेनात्मना मत्तता ख्यापिता ।

(३) राज्ञः इति मानधनस्येति कार्मुकभृत इति च विशेषणत्रयेण राज्ञोऽपमानोऽतीव दुःसहः, विशेषतः मानधनस्य, तथापि चापधारित्वेऽपि प्रतीकाराक्षमत्वमित्येतदपि अपमानायैवेति सूचितम् । यस्य बलाश्रयणेन यस्य च मन्त्रणेन अस्मद्विरोधिता कृता तयोः कर्णशल्ययोरपि समक्षं, तथापि कुरुबान्धवस्य कार्मुकभृत इति च विशेषणं योज्यं, तत्र कर्णपक्षे कुरूणां मित्रस्येत्यर्थः, शकुनिपक्षे बन्धुशब्दस्य पितृमातृवाचकतया तत्सम्बन्धित्वात् बान्धवस्य मातुलस्येत्यर्थः । तीक्ष्णैः करजैः नखैः, नान्यसाधनापेक्षेति भावः, क्षुण्णात् जीवत एव तस्य वक्षसः कोष्णम् असृक् रुधिरं, पीतम् । शार्दूलविक्रीडितं वृत्तम् ।

(४) अनुपलब्धसंज्ञः अप्राप्तचेतनः ।

(५) सरस्याः सरोजानाञ्च विलोलनेन शीतलः सुरभिश्चेति यथाक्रममन्वयो

पादपः, उचिता विश्रामभूमिरियं समरव्यापारखिन्नस्य वीर-जनस्य । अवश्यञ्चायमयत्नोपवीजिततालवृन्तेन (१) हरि-चन्दनच्छटाशीतलेनाप्रयत्नसुरभिणा दशापरिणामयोग्येन (२) सरसीसमीरणेन च विगतक्लमो भविष्यति महाराजः । लून-केतुश्चायं रथोऽनिवारित एव प्रवेक्ष्यति छायाम् । [ इति प्रवेशं रूपयित्वा ] । कः कोऽत्र भोः ! [ समन्तादवलोक्य ] । कथं न कश्चित् परिजनः !! नूनं तथाविधस्य वृकोदरस्य दर्शनात् एवंविधस्य च स्वामिनस्त्रासेन ( ३ ) शिबिरसन्निवेशमेव प्रविष्टः । (४) भोः ! कष्टं कष्टम् !!—

(५) दत्त्वा द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन् हरिण इव कृतं भीमसेनेन कर्म ।
दुःसाध्यामप्यरीणां लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं कुरुकुलविमुखं दैवमेतावताऽपि ॥

---

वीथ्यः, तादृशप्रभातमारुतेन वाहितः चालितः, सान्द्रः निरन्तरः, किसलयो यस्य ।

(१) अयत्नेन प्रयत्नं विनाऽपि, अनायासेनेत्यर्थः, अयत्नम् अयत्नसाध्यं वा, यदुपवीजितं व्यजनचालनादि, तदेव तालवृन्तमिव व्यजनकार्य्यमिव यस्य ।

(२) दशायाः अवस्थायाः, मूर्च्छावस्थाया इति यावत्, परिणामः अन्यथाभावः, तच्छान्तिरिति यावत्, तत्र योग्येन समर्थेन ।

(३) एवंविधस्य मूर्च्छां गतस्य, स्वामिनस्त्रासेन जीविष्यति न वेति संशयेन ; अत एव भीत्यर्थत्वाभावान्न पञ्चमी ।

(४) प्रविष्ट इति कर्त्तरि क्तः, परिजनविशेषणम् ।

(५) अभयं दत्त्वा पार्थात् भयं नाप्नोतीति अभयं प्रदर्श्य, पार्थात् सिन्धुराजो जयद्रथः, न रक्षितः, एवञ्च कुरुबलहानिः । भीमेन हरिणे इव अनायासवध्यत्वात् मृगतुल्ये, अस्मिन् दुःशासने क्रूरं कर्म वक्षःस्थलविदारणपूर्वकरुधिरपानं कर्म, अरीणाम्, अपि इति शेषः, दुःसाध्यामपि प्रतिज्ञां लघुमिव पूरयित्वा तादृशं कर्म

[राजानमवलोक्य]। कथमद्यापि न चेतनामुपलभते महाराजः !! भोः ! कष्टम् !!। [निःश्वस्य]।

(१) मदकलितकरेणुभज्यमाने विपिन इव प्रकटैकशालशेषे।
हतसकलकुमारके कुलेऽस्मिंस्त्वमसि विधेरवलोकितः कटाक्षैः॥

ननु भो हतविधे ! भरतकुलविमुख !—

(२) अक्षतस्य गदापाणेरनारूढस्य संशयम्।
एषाऽपि भीमसेनस्य प्रतिज्ञा पूर्य्यते त्वया॥

दुर्य्यो। [शनैरुपलब्धसंज्ञः]। आः ! का शक्तिरस्ति पवनतनयस्य वृकोदरस्य मयि जीवति दुर्य्योधने प्रतिज्ञां पूरयितुम्। (३) वत्स दुःशासन ! न भेतव्यं न भेतव्यम्, अयमहम् आगतोऽस्मि। सूत ! प्रापय रथं तमुद्देशं यत्र वत्सो दुःशासनः तिष्ठति।

---

कृतमित्यन्वयः, कुरुकुलविमुख तत्प्रतिकूल, दैव नियते, एतावताऽपि दुःशासन-वधपर्य्यन्तकरणेनापि, न नाम सम्पूर्णमनोरथं, न इत्यहं मन्ये इत्युत्प्रेक्षे, भो धृत् राष्ट्र कथमीदृशो दर्शित भावः। स्रग्धरा वृत्तम्।

(१) मदेन कलितः मत्तः, करेणुः करिशावकः भीमसेनरूपः, तेन भज्यमाने, प्रकट स्पष्ट, एक एव शाखी वृक्षः, शेषो यत्र तादृशे, हतसकलकुमारकपक्षसमृद्धे विपिने इव अस्मिन् कुले भवान् वर्त्तमानस्त्वं विधेः कुरुकुलविमुखभाग्यस्य, कटाक्षैरवलोकितः, मया विमुखत्वेऽवलम्बितेऽपि अवशिष्टमेकोऽपीदानीं शिष्यते इति मुद्रया दृष्ट इत्यर्थः। त्वमसीति दर्शनात् महाराजसम्बोधनकमेवेदं वाक्यमिति बोध्यम्। पुष्पिताग्रा वृत्तम्।

(२) भीमेन ऊरुभङ्गार्थं युद्धकरणे उभयोश्च युद्धे भीमस्य शरीरक्षतादिकं जीवनं भवेत् न वेति संशयं समारोपयताम्, अनारूढस्याप्राप्तस्य, दुर्य्योधनस्य गदायुद्धे नैपुण्यात् भीमस्य जीवने अवश्यमेव संशयो भवेदिति सूचितम्। एषा ऊरुभङ्ग-फलीभूता वधरूपा, प्रतिज्ञा पूर्य्यते पूर्त्तिं प्राप्यते इति। पथ्यावक्त्रं वृत्तम्।

(३) सूतपठितश्लोकोक्तस्य प्रतिज्ञा पूर्य्यते इति भागस्योच्चारणसमये लब्धसञ्ज-

सूत। आयुष्मन्! अक्षमाः सम्प्रति वाहास्ते रथमुद्वोढुम्। [अपवार्य्य]। [* वयस्य]।

दुर्य्यो। [रथादवतीर्य्य सगर्वं साकूतञ्च]। किं स्यन्दनगमनकालातिपातेन?।

सूत। [सवैलक्ष्यं सकरुणञ्च]। मर्षयतु आयुष्मान्।

दुर्य्यो। धिक् सूत! किं रथेन? केवलमरातिविमर्दसङ्कटसञ्चारी दुर्य्योधनः खल्वहं, तद्गदामात्रसहायः समरभुवम् अवतरामि।

सूत। आयुष्मन्! एवमेतत्, कः सन्देहः?।

दुर्य्यो। यद्येवं, किमेवं भाषसे?। पश्य—

(१) बालस्य मे प्रकृतिदुर्ललितस्य पापः
पापं व्यवस्यति समक्षमुदायुधोऽसौ।
अस्मिन्निवारयसि किं व्यवसायिनं माम्?
क्रोधो न? नापि करुणा? न च तेऽस्ति लज्जा?॥

सूत। [सकरुणं पादयोर्निपत्य]। एतद्विज्ञापयामि आयु-

---

तथा तच्छ्रवणे दुःशासनोरःस्थलासवपानप्रतिज्ञापूरणपरतां मत्वा तत्प्रतीकारार्थमुद्यतस्य राज्ञः का शक्तिः प्रतिज्ञा पूरयितुमित्युक्तिरिति बोध्यम्।

(१) बालस्य अत एव प्रकृत्या स्वभावेन, चञ्चलस्य चापलेन द्रौपदीकेशाम्बराकर्षणादिकं बालभावादेव कृतमिति सूचितं, मे समक्षं पापः उदायुधः सन् पापं वक्षःस्थलविदारणरूपं, व्यवस्यति करोति, अस्मिन् विषये एतत्प्रतीकाराय, व्यवसायिनं कृतोद्यमं, मां निवारयसि अत ते तव, क्रोधो न? अनुचर्षणेऽपि क्रोधाभावः, करुणा न? परदुःखप्रहरणेच्छाभावः? लज्जा न? शत्रूणां समक्षं प्रतिज्ञा पूर्य्यते तत्सहनादपमानाबोधाच्च न लज्जा? इत्याशयः। वसन्ततिलकं वृत्तम्।

---

* [ गमीरथं च ] क्वचिदित्यपि पाठः।

ष्मन्! सम्पूर्णप्रतिज्ञेन निवृत्तेन भवितव्यम् (१) इदानीं दुरात्मना वृकोदरहतकेन, अत एवं ब्रवीमि।

दुर्य्यो। [सहसा भूमौ पतन्]। हा वत्स! दुःशासन! हा मदाज्ञाविरोधितपाण्डव! हा विक्रमैकरस! हा मदङ्कदुर्ललित। (२) हा अरातिकुलगजघटामृगेन्द्र! हा युवराज! क्वासि? प्रयच्छ मे प्रतिवचनम्। [इति निःश्वस्य मोहमुपगतः]।

दुर्य्यो। [संज्ञां लब्ध्वा निःश्वस्य]।

(३) युक्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितोऽपि हि मया न वृथाऽग्रजेन।
अस्मासु वत्स! तव हेतुरहं विपत्तेः
यत् कारितोऽस्यविनयं न च रक्षितोऽसि॥

[इति पतति]।

सूत। आयुष्मन्! समाश्वसिहि।

दुर्य्यो। धिक् सूत! किमनुष्ठितं भवता?।

(४) रक्षणीयेन सततं बालेनाज्ञानुवर्त्तिना।
दुःशासनेन भ्रात्राऽहमुपहारेण रक्षितः॥

---

(१) भवितव्यमिति पाठो न सम्यक्, भूतमिति पाठः सङ्गच्छते इति बोध्यम्।

(२) मदङ्के दुर्ललितं चापल्यरूप चेष्टा यस्य तत्सम्बुद्धौ।

(३) उपभोगसुखेषु भोजनाच्छादनादिसम्भोगजनकव्यापारेषु, न लालितः न पालितः, अत एव मयि वृथाऽग्रजत्वम्, अस्मा भीमसेनकृतवक्षोविदारणरूपायाः, विपत्तेः अहमेव हेतुः, द्रौपद्याः केशाम्बराकर्षणादेर्मदाज्ञयैव कृतत्वात्, अविनयं द्रौपदीकेशपट्टादिरूप, कारितः, त्वत्कृतापकारप्रतीकर्त्तुर्भीमात् न च रक्षितः। वसन्ततिलकं वृत्तम्।

(४) देवादिभ्यः अनिष्टनिवारणार्थं दीयमानो पश्वादिरुपहारः, तथा च भीमाय एतादृश भ्रातरमुपहारत्वेन दत्त्वाऽहं रक्षित इत्यनुचितं कृतमित्यर्थः। पथ्यावक्त्रं वृत्तम्।

सूत। महाराज! मम भेटिभिरिषुतोमरशक्तिप्रासवर्षैः महारथानामपहृतचेतनत्वाच्चिश्चेतनः अतो महाराज इत्यप-हृतो मया रथः ।

दुर्य्यो। सूत ! विरूपं कृतवानसि—

(१) तस्यैव पाण्डवपशोरनुजद्विषो मे
चोदैर्गदाऽशनिकृतैर्न विबोधितोऽस्मि ।
यत्रैव नाधिशयितो रुधिरार्द्रशय्यां
दौःशासनीं यदहमद्य वृकोदरो वा ॥

[ निःश्वस्य नभो विलोक्य ]। ननु भो ! हतविधे ! कृपा-विरहित ! भरतकुलविमुख !—

(२) अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः ? ।

सूत। शान्तं पापं महाराज ! किमिदम् ? ।

दुर्य्यो। घातिताशेषबन्धोर्मे किं राज्येन जयेन वा ? ॥

[ ततः प्रविशति सम्प्रहारः पुरुषः ]।

पुरुषः। अज्जा ! अवि णाम इमस्सिं उद्देसे सारहिदुइओ

(१) ममानुजद्विषस्तस्य गदारूपवज्रकृतैः चोदैर्निष्पेषैस्तत्कृतध्वनिरित्यर्थः। चोभै-रिति पाठे—तत्कृतनोदनैः, यदि यस्मात् रणभूमितोऽपवाहनात् हेतोः, न विबोधितो-ऽस्मि, अनपवाहे तु उक्तहेतुभिरवश्य बोधितः स्यामित्यर्थः, यत्रैव पाठस्तु समीचीनः, हि यस्मात्, यत्र विबोधितोऽस्मीत्यर्थः, यत्र प्रागुक्तहेतोरेव दौःशासनीं तद्गृहीतां रुधिरार्द्रशय्यामहं वृकोदरो वा अद्यैव नाधिशयितः, अनपवाहने तु अत्रैर्हेतुभिः बोधितः सन् भीमेन सह युध्यमानस्तेन हतः अहमथवा मया हतो वृकोदरो वा तामधिशयितः स्यादित्यर्थः, एवञ्च एतद्द्वयं यत्र सम्भूतं तत्रापवाहनमेव हेतुरतो विरूपताकरणं यदुक्तं तत् समर्थितम्। वसन्ततिलकं वृत्तम्।

(२) यथेष्टं मूर्च्छाशोकरोगादिना मृत्युर्भवेदपि न तु वृकोदरहस्तात् मरणं भवेदित्याशयः। पथ्यावक्त्रं वृत्तम्।

( क ) आर्य्याः ! अपि नाम अस्मिन्नुद्देशे सारथिद्वितीयो

दिट्ठो तुह्मेहिं महाराअदुज्जोहणो ण वेत्ति ?। कहं, ण कोवि मंतेदि ? होदु, बहुपरिअराणं पुरिसाणं समूहो दीसइ, एत्थ गदुअ पुच्छिस्सं। [ विलोक्य ]। कहं, एदे क्खु सस्सामिणो गाढप्पहारस्स घणसल्लाइजालदुब्भेज्जमुहेहिं कंकवत्तेहिं हिअआदो सल्लाइं उद्धरंति, ता क्खु एदे ण जाणंति। होदु, अण्णदो विचिणिस्सं। इमे क्खु अवरे पहूददरा संकलिदा वीरमाणुसा, ता एत्थ गदुअ पुच्छिस्सं। [ उपगम्य ]। हंहो ! आणाह, कस्सिं उद्देसे कुरुणाहो वट्टइ त्ति ? कधं, एदेवि मं पेक्खिअ अहिअदरं रोअंति, [ दृष्ट्वा ]। ता णहु एदेवि जाणंति। हा ! दुक्करं क्खु एत्थ वट्टइ, एसा वीरमादा समरविणिहदं पुत्तअं सुणिअ रत्तंसुअणिवसणाए समग्गभूसणाए वहुए सह अणुमरेदि। [ सश्लाघम् ]। साहु वीरमादे ! साहु, अण्णस्सिंवि जम्मांतरे अणिहदपुत्तआ हुविस्सदि। होदु, अण्णदो * विचिणिस्सं ]। [ अन्यतो विलोक्य ]। अअं अवरो

---

दृष्टो युष्माभिः महाराजदुर्योधनो न वेति ?। कथं, न कोऽपि मन्त्रयते ? भवतु, बहुपरिकराणां पुरुषाणां समूहो दृश्यते, अत्र गत्वा प्रक्ष्यामि। कथम्, एते खलु सस्वामिनो गाढप्रहारस्य घनसल्लाइजालदुर्भेद्यमुखैः ( निबिडशल्लाइजालमिव दुर्भेद्यानं येषां तैः ) कङ्कपत्रैः ( शल्योद्धारयन्त्रभेदैः ) हृदयात् शल्यानि उद्धरन्ति, तत् खल्वेते न जानन्ति। भवतु, अन्यतो विचेष्यामि। इमे खलु अपरे प्रभूततराः सङ्कलिताः वीरमानुषाः, तदत्र गत्वा प्रक्ष्यामि। हंहो ! आनाथ, कस्मिन् उद्देशे कुरुनाथो वर्तते ? इति। कथम्, एतेऽपि मां दृष्ट्वा अधिकतरं रुदन्ति, तन्न खल्वेतेऽपि जानन्ति। हा ! दुष्करं खलु अत्र वर्तते, एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्रभूषणया बध्वा सह अनुम्रियते। साधु वीरमातः ! साधु, अन्यस्मिन्नपि जन्मान्तरे अनिहतपुत्रका भविष्यसि। भवतु, अन्यतो विचे-

---

* [ पुच्छिस्सं ] क्वचिदित्यपि पाठः।

बहुप्पहारणिहदकाओ अकिदव्वणप्पडिआरो एव्व जोहसमूहो इम सुण्णासणं तुलंगमं उवालहिअ रोइदि, णूणं एदाणं एत्थ एव्व सामी व्वावादिदो, ता णहु एदे वि जाणंति। होदु, अण्णदो गदुअ पुच्छिस्सं। [सर्वतो विलोक्य]। कहं, सव्वो एव्व अवत्थाणुरूवं व्वसणं अणुभवंतो भाअधेअविमुहदाए पज्जाउलो जणो, ता कं एत्थ पुच्छिस्सं? कं वा उवालहिस्सं?। होदु, सअं एव्व एत्थ विचिणिस्सं। [परिक्रम्य]। होदु, देव्वं दाणीं उवालहिस्सं। हंहो देव्व! एआदसाणं अक्खोहिणीणं (१) णाहो, जेट्ठो भादुसदस्स, भत्ता गांगेयजअद्दहदोणंगराअ-सल्लकिवकिदवम्मअस्सत्थामप्पमुहस्स राअचक्कस्स सअलप्पहिवी-

(१) अक्षौहिण्यां प्रसङ्ख्याता रथानां द्विजसत्तमाः।
सङ्ख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः॥
शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः॥ ( २१८७० रथाः )
गजानाञ्च परीमाणं तावदेव विनिर्दिशेत्। ( २१८७० गजाः )
ज्ञेयं शतसहस्राणि सहस्राणि नवैव तु॥
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः॥ ( १०९३५० नराः )
पञ्चषष्टिसहस्राणि तथाऽश्वानां शतानि च।
दशोत्तराणि षट् प्राहुर्यथावदिह सङ्ख्यया॥ ( ६५६१० वाजिनः )
आदिपर्वणि २ अध्यायोक्ताक्षौहिणीसङ्ख्या ग्राह्या।

ष्यामि। अयमपरो बहुप्रहारनिहतकायोऽकृतव्रणप्रतीकार एव योधसमूह इमं शून्यासनं तुरङ्गममुपालभ्य रोदिति, नूनमेषामत्रैव स्वामी व्यापादितः, तन्न खल्वेतेऽपि जानन्ति। भवतु, अन्यतो गत्वा प्रक्ष्यामि। कथं, सर्व एव अवस्थाऽनुरूपं व्यसनमनुभवन् भागधेयविमुखतया पर्य्याकुलो जनः,तत् कमत्र प्रक्ष्यामि? कं वा उपालप्स्ये?। भवतु स्वयमेवात्र विचेष्यामि। भवतु, दैवमिदानीमुपालप्स्ये। अहो दैव! एकादशानामक्षौहिणीनां नाथः, ज्येष्ठो भ्रातृशतस्य, भर्त्ता गाङ्गेयजयद्रथद्रोणाङ्गराज-

मंडलेक्कणाहो महाराअदुज्जोहणोवि अस्सेसीअदि ? (१) ण जाणे, कस्सिं उद्देसे सो वट्टइ त्ति। [विचिन्त्य निःश्वस्य च]। अहवा किं एत्थ देव्वं उवालहामि ? जदो तस्स क्खु एदं णिब्भच्छिद-विदुलवअणबीअस्स. (२) परिहुदपितामहहिदोवदेसंकुरस्स, (३) सउणिहदअप्पोत्साहणादिविरूढमूलस्स, (४) जदुगेहदूद-विससाहिणो, (५) संभिदचिरआलसंबद्धवेरालवालस्स, (६) पंचालिआकेसग्गहणकुसुमस्स (७) फलं परिणमदि (८)। [अन्यतो विलोक्य]। जहा एत्थ एसो विविहरअणप्पहा-संवलिदसूरकिरणप्पसूदसक्कचावसहस्ससंपूरिददसदिसामुहो(९)

(१) अन्विष्यते इत्यनेन बहुसैन्यानां विनाशात् परिजनाहतत्वाभावेन क्वचित् क्षीयते इत्यनुसन्धानं कर्त्तव्य, तच्च दुर्भाग्यकृतमित्याशयः।

(२) निर्भर्त्सितमवज्ञातं, यत् विदुरवचनं तदेव बीजं यस्य।

(३) परिभूतः पितामहहितोपदेशः. भीष्महितकथनम्, अङ्कुरो यस्य।

(४) शकुनिरेव हतकः सर्वानिष्टकरत्वात्, तस्य यत् प्रोत्साहनादि उत्तेजनादि, तेन विरूढं जातं, मूलं यस्य।

(५) जतुगृहं द्यूत विषञ्च तान्येव शाखो वृक्षः, तद्रूपस्य।

(६) सम्भृतः सञ्चितः, चिरकालसम्बन्धा यस्य चिरसञ्चितमित्यर्थः, तादृश यत् वैर विशेषः, तदेवालवालो यस्य, सिक्तजलधारणार्थं वृक्षमूले मृत्तिकादिरचितक्षुद्र-सेतुविशेष आलवालः।

(७) पञ्चालिकायाः केशग्रहणमेव कुसुमं यस्य।

(८) तादृशवृक्षस्य फलमिव फल कार्य्यं, परिणमति भरतकुलक्षयरूपतया जायते इत्यर्थः।

(९) विविधरत्नप्रभया संवलितेन मिश्रितेन, सूर्य्यकिरणेन प्रसूतं जनितं, यदिन्द्र-चापसहस्र तेन पूरित दशदिङ्मुखं येन।

अस्त्यकपञ्चतवर्णोऽश्वत्थामप्रमुखस्य राजचक्रस्य, सकलपृथिवीमण्डलैकनाथो महाराज-दुर्य्योधनोऽपि अन्विष्यते ? न जाने, कस्मिन्नुद्देशे स वर्त्तते इति। अथवा किमत्र दैवमुपालभे ? यतस्तस्य खल्विदं निर्भर्त्सितविदुरवचनबीजस्य, परिभूतपितामह-हितोपदेशाङ्कुरस्य, शकुनिहतकप्रोत्साहनादिविरूढमूलस्य, जतुगृहद्यूतविषशाखिनः,

लूणकेदुवंसो रहो दीसइ ता अहं तक्केमि, अवस्सं एदिना महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वम्। (क)

[ उपसृत्य दृष्ट्वा च ]। जअदु जअदु महाराओ। (ख)

सूत। [ विलोक्य ]। आयुष्मन्! समरात् सुन्दरकः प्राप्तः।

दुर्य्यो। [ विलोक्य ]। अये सुन्दरक! कच्चित् कुशलम् अङ्गराजस्य?।

सुन्द। देव! कुसलं सरीरमेत्तेण। (ग)

दुर्य्यो। [ ससम्भ्रमम् ]। सुन्दरक! किं किरीटिनाऽस्य निहता धौरेयकाः? हतः सारथिः? भग्नो वा रथः?।

सुन्द। देव! ण रहो भग्गो, से मणोरहोवि। (घ)

दुर्य्यो। [ सरोषम् ]। अरे! किमिवमस्पष्टकथितैराकुलमपि मे मनः पर्य्याकुलयसि? तदशेषतो विस्पष्टं कथ्यताम्।

सुन्द। ज देवो आणवेदि। अए! देवस्स मउडमणिप्पहावेण अवणीदा मे रणप्पहारवेअणा। [ इति साटोपं परिक्रम्य ] सुणादु देवो, अज्ज दाव कुमालदुस्सासणवहो—(ङ)
[ इत्यर्द्धोक्ते मुखमावृणोति ]।

---

सम्भृतचिरकालसम्बद्धवैरानलस्य, पाञ्चालिकाकेशग्रहणकुसुमस्य फलं परिणमति। यथा चैष विविधरत्नप्रभामांसलितसुव्याकरणप्रसूतशक्रचापसहस्रसम्पूरितदशदिङ्मुखो लूनकेतुवंशो रथो दृश्यते तदहं तर्कयामि, अवश्यमेतेन महाराजदुर्य्योधनस्य विश्रामोद्देशेन भवितव्यम्।

(ख) जयतु जयतु महाराजः।

(ग) देव! कुशलं शरीरमात्रेण।

(घ) देव! न रथो भग्नः, अस्य मनोरथोऽपि।

(ङ) यद्देव आज्ञापयति। अये! देवस्य मुकुटमणिप्रभावेणापनीता मे रणप्रहारवेदना। शृणोतु देवः, अद्य तावत् कुमारदुःशासनवध,—

सूत। सुन्दरक! कथय, कथितमेव देवेन।

दुर्यो। कथ्यतां, श्रुतमस्माभिः।

सुन्द। सुणादु देवो, अज्ज दाव कुमालदुस्सासणवहा-मरिसिदेण सामिणा अंगराएण कुडिलभिउडीभंगभीसणललाड-वट्टेण अविस्सादसंधाणमोक्खेण सिलीमुहसंघादवरिसिणा अभिजुत्तो सो दुराआरो मज्झमपंडओ भीमसेणहदओ। (क)

उभौ। ततस्ततः?।

सुन्द। तदो देव! उभअबलमिलंतदीप्पंतकरितुरअ-पदादिसमुब्भूदधूलिणिवहेण पल्लत्थतत्थन्दणवडासंघादेण अ वित्थरंतेण अन्धआरेण अंधीकिदं उभअबलं ण भुवणतलं लक्खीअदि। (ख)

उभौ। ततस्ततः?।

सुन्द। तदो देव! दूराकड्ढिदधणुग्गुणच्छोटणटंकार-गंभीलभीसणेण अंधआरेण जाणीअदि गज्जिदं पलअजल-हरेण त्ति (१)। (ग)

---

(१) अन्धकारस्य मेघतुल्यश्यामलतया धनुष्टङ्कारस्य गर्जितसाम्येन च भातत्वात् प्रलयमेघेन गर्जितमिति ज्ञायते इत्युत्प्रेक्ष्यते इत्यर्थः।

---

(क) शृणोतु देवः, अद्य तावत् कुमारदुःशासनवधामर्षितेन स्वामिनाऽङ्गराजेन कुटिलभृकुटीभङ्गभीषणललाटपट्टेन अविज्ञातसन्धानमोक्षेण शिलीमुखसङ्घातवर्षिणा अभियुक्तः स दुराचारो मध्यमपाण्डवो भीमसेनहतकः।

(ख) ततो देव! उभयबलमिलद्दीप्यत्करितुरगपदातिसमुद्भूतधूलिनिवहेन पर्य्यस्तत्रस्तस्यन्दनघटासङ्घातेन च विस्तीर्य्यमाणेनान्धकारेण अन्धीकृतमुभयबलं न भुवनतलं लक्ष्यते।

(ग) ततो देव! दूराकृष्टधनुर्गुणास्फोटनटङ्कारगम्भीरभीषणेनान्धकारेण ज्ञायते गर्जितं प्रलयजलधरेणेति।

दुर्य्यो। ततस्ततः ?।

सुन्द। तदो देव ! दोह्णं ताणं अण्णोण्णसिंहणादगज्जिद-पिसुणं, (१) विविहपरिमुक्कप्पहरणाहदकवअसंगलिदज्जलण-विज्जुअं. (२) बहललुहिरबिन्दुखज्जोअभासुरं, गंभीरत्थणिद-चावजलहरप्पसरिदसरधारासहस्सवरिसदुद्दंसणं (३) संभूदं समरदुद्दिणम्। (क)

दुर्य्यो। ततस्ततः ?।

सुन्द। तदो अ देव! एदस्सिं अंतरे जेट्ठस्स भादुणो पराभवसंकिणा धणंजएण वज्जणिग्घादणिग्घोसविसमर-हेसिदहओ,(४) सिहरट्ठिदवाणरो (५) तुरंगमसंवाहणव्वावुद-वासुदेवसंखचक्कगदासिलंछिदचडुलचउव्वाहुदुद्दंसणो, (६)

---

(१) अन्योऽन्यमुद्दिश्य सिंहनादः सिंहस्येव शब्दः, स एव गर्जितस्य मेघनादस्य, पिशुनः सूचकः यत्र।

(२) विविधैः परिमुक्तैः प्रहरणैः शस्त्रैः, आहतात् आघट्टितात्, कवचात् लौहमयसन्नाहात्, सङ्गलिता स्फुरिता, ज्वलन एव विद्युत् यत्र। विद्युत्कमिति पाठे—विद्युत्समूहो यत्रेति वाक्यम्।

(३) गम्भीरं स्तनितं गर्जितं, यस्य तादृशश्चाप एव जलधरो मेघः, तस्मात् प्रसरत् यत् शराणां धारासहस्रं धारारूपतां प्राप्तं शरसहस्रमित्यर्थः, तत् यत्र एवम्भूतेन वर्षेण शरनिक्षेपवृष्ट्या, दुर्दर्शनम्।

(४) वज्रनिर्घातः वज्रशब्द इव, यो निर्घोषः रथचक्रकठोरशब्दः, तेन विषमराश्वाः, हेषिताः हयाः यत्र। हेषणा वाजिशब्दः।

(५) शिखरस्थितवानरः कपिध्वजः।

(६) तुरङ्गमाणामश्वानां, संवाहने चालने, व्यापृतस्य वासुदेवस्य शङ्खादिलाञ्छितैः

(क) ततो देव। द्वयोस्तयोरन्योऽन्यसिंहनादगर्जितपिशुनं. विविधपरिमुक्त-प्रहरणाहतकवचसङ्गलितज्वलनविद्युत्कं, बहलरुधिरबिन्दुखद्योतभासुरं, गम्भीर-स्तनितचापजलधरप्रसरच्छरधारासहस्रवर्षदुर्दर्शनं सम्भूतं समरदुर्दिनम्।

आपूरिअपंचजण्णदेअदत्त(१)ताररसिदप्पडिरवभरिददसदिसामुहकुहरो धाविदो तं उद्देसं रहवरो। (क)

दुर्य्यो। ततस्ततः?।

सुन्द। तदो भीमसेणधणंजएहिं अहिजुत्तं पिदरं पेक्खिअ ससंभमं विअलिअं अवधूणिअ रअणमोसअं आकण्णाकट्टिदकठिणकोदंडजीओ, दाहिणहत्थविक्खित्तसरपुंखबंधणो, (२) विघट्टणतुवराइदसारहीओ तं देसं उवगदो कुमालविससेणो। (ख)

दुर्य्यो। [सावष्टम्भम्]। ततस्ततः?।

सुन्द। तदो अ देव! तेण आअच्छंतेण एव्व कुमालविस-

चतुर्भिर्बाहुभिः दुर्दर्शनः, यद्यपि वासुदेवस्य चतुर्भुजतया समुद्भवेऽपि जन्मोत्तरमेव द्विभुजता जातेति भागवते "तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम्" इति, "पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः" इति च १० स्क० ३ अध्याये उक्ता, तथाऽपि भारतयुद्धकाले विपक्षसैन्यानां त्रासनार्थं पुनश्चतुर्भुजता प्रकटिता, "तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते!" इति गी० ११ अ० विश्वरूपदर्शनात् भीतस्यार्जुनस्य भगवन्तं प्रति तेनैवेत्युक्त्या चतुर्भुजाश्रितेति सूचितम्।

(१) पाञ्चजन्यः केशवशङ्खः, देवदत्तः अर्जुनशङ्खः, "पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः" इति गीतायामुक्तत्वात्।

(२) दक्षिणहस्ते विक्षिप्तो यत्र तादृशं शरपुङ्खबन्धनं यस्य।

---

(क) ततश्च देव! एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः पराभवशङ्किना धनञ्जयेन वज्रनिर्घातनिर्घोषविषमक्रोषितहयः, शिखरस्थितवानरः, तुरङ्गमसंवाहनव्यापृतवासुदेवशङ्खचक्रगदाऽसिशार्ङ्गाङ्कितचटुलचतुर्बाहुदुर्दर्शनः, आपूरितपाञ्चजन्यदेवदत्ततारसितप्रतिरवभरितदशदिशामुखकुहरो धावितस्तमुद्देशं रथवरः।

(ख) ततो भीमसेनधनञ्जयाभ्यामभियुक्तं पितरं प्रेक्ष्य ससम्भ्रमं विगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डज्यः, दक्षिणहस्तविक्षिप्तशरपुङ्खबन्धनः, विघट्टनत्वरायितसारथिकस्तं देशमुपगतः कुमारवृषसेनः।

सेणेण विदलिदसिहासामलसिणिद्धपुंखेहिं, (१) कठिणकंकवत्तेहिं, किसणवरणेहिं, सिलाणिसिदसामलसल्लबंधेहिं कुसुमिदो विअ तरु मुहुत्तएण सिलिमुहेहिं पच्छादिदो धणंजअस्स रहवरो । (क)

उभौ । [ सहर्षम् ] । ततस्ततः ? ।

सुन्द । तदो देव ! तीक्खविक्खित्तणिसिदभल्लवाणवरिसिणा धणंजएण ईसि विहसिअ भणिदं, अरे रे विससेण ! पिदुणो वि दाव दे ण जुत्तं मह अभिमुहं ठादुं, किं उण भवदो बालस्स, ता गच्छ, अवरेहिं कुमारेहिं आओधेहि । एव्वं वाअं णिसमिअ गुरुअणाहिक्खेवेण उद्दीविअकोवोपरत्तमुहमंडलविअंभिअभिउडीभंगभीमणेण चावधारिणा कुमालविससेणेण वि मम्मभेदएहिं, परुसविसमेहिं, सुदिवहकिदप्पणएहिं (२) णिब्भच्छिदो गंडीवी बाणेहिं, ण उण दुट्ठवअणेहिं । (ख)

---

(१) विदलिता चुम्बा, विष्टेति यावत्, शिखा तज्जन्याञ्जनमिव श्यामला: स्निग्धा: चिक्कणा:, पुङ्खा येषाम् ।

(२) श्रुत: कर्णस्य, पन्थास्तत्र कृतप्रणये: पाकर्णाकृष्टैरित्यर्थ: । दुष्टवचनपक्षे— श्रुते: श्रवणस्य, बधे कठोरतया श्रुतियोग्यताराहित्ये, कृतप्रणये: कृतानुबन्धै: ।

---

(क) ततश्च देव ! तेनागच्छतैव कुमारवृषसेनेन विदलितशिखाश्यामलस्निग्धपुङ्खै:, कठिनकङ्कपत्रै:, कृष्णवर्णै:, शिलानिशितश्यामलशल्यबन्धै: कुसुमित इव तरुर्मुहूर्तेन शिलीमुखै: प्रच्छादितो धनञ्जयस्य रथवर: ।

(ख) ततो देव ! तीक्ष्णविक्षिप्तनिशितभल्लबाणवर्षिणा धनञ्जयेन ईषद्विहस्य भणितम्, अरे रे वृषसेन ! पितुरपि तावत्ते न युक्तं ममाभिमुखं स्थातुं, किं पुनर्भवतो बालस्य, तद्गच्छ, अपरै: कुमारैरायुध्यस्व । एवं वाचं निशम्य गुरुजनाधिक्षेपोद्दीपितकोपोपरक्तमुखमण्डलविजृम्भितभ्रुकुटीभङ्गभीषणेन चापधारिणा कुमार-

राजा । साधु वृषसेन! साधु । सुन्दरक । ततस्ततः? ।

सुन्द । तदो अ देव! णिसिदसराभिघादवेअणोपजाद-मस्सुणा (१) गंडीविणा चंडगंडीवज्जासद्दणिज्जिदवज्ज-णिग्घादघोसेण बाणणिपडणप्पडिसिद्धसेणप्पसरेण पत्थुदं सिक्खाबलाणुरूवं किं वि अच्चरीअं । (क)

दुर्यो । [ साकूतम् ] । ततस्ततः? ।

सुन्द । तदो अ देव! तं पेक्खिअ तस्स सत्तुणो समर-व्वावारचउरत्तणं अविभाविअतूणीमुहधणुग्गुणगमणागमण-बाणसंधाणमोक्खचडलकरअलेण (२) कुमालविससेणेण वि सविसेसं पत्थुदं समलकम्म । (ख)

दुर्यो । ततस्ततः? ।

सुन्द । तदो अ देव! परिसेसिदरणव्वावारो विमुक्कचिर-णिव्वट्टिदवेराणुबंधो दोसुं वि कुरुराअपंडवबलेसु साहु

(१) निशितानां तीक्ष्णीकृतानां, शराणामभिघातेन जातो मन्युः क्रोधो यस्य ।

(२) अविभावितयोः अज्ञातयोः, तूणीमुखधनुर्गुणयोः गमनागमनयोः सन्धान-मोक्षयोः गुणसंयोजनपरित्यागयोश्च, चटुलं चपलं, करतलं यस्य तेन ।

वृषसेनेनापि मर्मभेदकैः, पत्त्रविषमैः, श्रुतिपथकृतप्रणयैः ( पक्षे—श्रुतिपथकृतप्रणयैः ) निर्भर्त्सितो गाण्डीवी वाक्यैः, न पुनर्दुष्टवचनैः ।

(क) ततश्च देव! निशितशराभिघातवेदनोपजातमन्युना गाण्डीविना चण्ड-गाण्डीवज्याशब्दनिर्जितवज्रनिर्घातघोषेण बाणनिपतनप्रतिषिद्धसैन्यप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम् ।

(ख) ततश्च देव! तत् प्रेक्ष्य तस्य शत्रोः समरव्यापारचतुरत्वमविभाविततूणी-मुखधनुर्गुणगमनागमनबाणसन्धानमोक्षचटुलकरतलेन कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म ।

विससेण ! साहु त्ति कलअलमुहरो वीरलोओ आलोअइदुं पउत्तो । (क)

दुर्यो । [सविस्मयम्] । ततस्ततः ? ।

सुन्द । तदो अ देव ! अवहीरिदसअलधाणुक्कचक्कपराक्कमसालिणो सुदस्स तहाविहेण समलकम्मालंभेण हरिसरोमकरुणासक्कासंकडे अणुवट्टमाणस्स सामिणो अंगराअस्स णिवडिआ अरपइइ भीमसेणे, बाप्पआउला दिट्ठी कुमालविससेणे । (ख)

दुर्यो । [सविस्मयम्] । ततस्ततः ? ।

सुन्द । तदो अ देव ! उभअबलप्पउत्तसाहुक्कारामरिसिदेण अरबरिसपज्जलिदेण गंडीविणा तुरगेसु सारहिं वि रहवरे धणुं वि जीआइं वि णलिंदलंछणे सिदादवत्ते व्वावारिदा समं सिलीमुहा । (ग)

दुर्यो । [सभयम्] । ततस्ततः ? ।

सुन्द । तदो अ देव ! विरहो लुणगुणकोदंडो परिब्भमण-

(क) ततश्च देव ! परिशिथिलितरणव्यापारो विमुक्तचिरनिर्वासितवैरानुबन्धो द्वयोरपि कुरुराजपाण्डवबलेषु साधु वृषसेन । साधु इति कलकलमुखरो वीरलोक आलोकयितुं प्रवृत्तः ।

(ख) ततश्च देव ! अवधीरितसकलधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्मारम्भेण हर्षरोषकरुणासङ्कटेऽनुवर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरवृष्टिर्भीमसेने, बाष्पाकुला दृष्टिः कुमारवृषसेने ।

(ग) ततश्च देव ! उभयबलप्रवृत्तसाधुकारामर्षितेन शरवर्षप्रज्वलितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि ज्यायामपि नरेन्द्रलाञ्छने सितातपत्रे व्यापारिताः समं शिलीमुखाः ।

व्वावारमेत्तप्पड़िसिद्धसरसंपादो मंडलाइं (१) विरइदुं पउत्तो कुमालो। (क)

दुर्य्यो। [ साश्चर्य्यम् ]। ततस्ततः ?।

सुन्द। तदो अ देव! सुदरहविद्धंसणामरिसुद्दीविदेण सामिणा अंगराएण अगणिअभीमसेणाभिजोएण पल्लत्थो धणंजअस्स उवरि सिलीमुहासारो। कुमालविससेणो वि परिजणोवणीदं अण्णं रहं आरुहिअ पुणोवि पउत्तो धणंजआभिजोए, भणिदं अ कुमालेण, रे रे तादाहिक्खेवमुहल! मज्झमपंडव! मह सरा तुह सरीरं उज्झिअ अस्सिं ण णिवडंति, त्ति भणिअ सरसहस्सेहिं पंडवसरीरं पच्छादिअ सिहणादेण गज्जिदुं पउत्तो। (ख)

दुर्य्यो। [ सविस्मयम् ]। अहो! बालस्य पराक्रमो मुग्धस्वभावस्यापि!! ततस्ततः ?।

सुन्द। तदो अ देव! तस्स सरसहस्ससंपादं अवधुणिअ किरीड़िणा गहिदा रहात्संगादो कणंतकणअकिंकिणीजाल-

---

(१) मण्डलानि मण्डलाकारगतिभेदान्, यैः शत्रुमुक्तशराणां शरीरप्रवेशो न भवति तानीत्यर्थः।

---

(क) ततश्च देव! विरथो लूनगुणकोदण्डः परिजनमण्डव्यापारमात्रप्रतिसिद्ध-शरसम्पातो मण्डलानि विरचयितुं प्रवृत्तः कुमारः।

(ख) ततश्च देव! सुतरथविध्वंसनामर्षोद्दीपितेन स्वामिना अङ्गराजेन अगणित-भीमसेनाभियोगेन पर्य्यस्तो धनञ्जयस्योपरि शिलीमुखासारः। कुमारवृषसेनोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनञ्जयाभियोगे, भणितञ्च कुमारेण, रे रे ताताधिक्षेपमुखर! मध्यमपाण्डव! मम शरास्तव शरीरमुज्झित्वा अन्यस्मिन् न निपतन्ति, इति भणित्वा शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः।

झंकारविराइणी, मेहोवरोहविमुक्कणहत्थलणिम्मला, णिसिद-सामलसिणिद्धमुही, विविहरअणप्पहाभासुरभोसणरमणिज्ज-दंसणा सत्ती, सोवहासं विमुक्का अ धणंजएण कुमालाभि-मुहम्। (क)

दुर्य्यो। [ सविषादम् ]। अहह!।

सुन्द। तदो अ देव! पज्जलंतीं सत्तिं पेक्खिअ विअलिइं अगराअस्स हत्थादो ससरं धणु, हिअआदो वोरसुलहो उस्साहो, णअणादो बाप्पसलिलं, वअणादो हसिदं, हसिदं अ धणंजएण, सिंहणादं विणादिदं विओदलेण अ, दुक्कलं दुक्कलं दुक्कलं त्ति आक्कंदिदं कुरुवलेण। (ख)

दुर्य्यो। [ सविषादम् ]। ततस्ततः?।

सुन्द। तदो अ देव! कुमालविससेणेण कण्णाकिट्टणिसिद-खुरप्पेण सुचिरं णिज्झाइअ अड्ढपहे एव्व भाइरही विअ भअ-वदा विसमलोअणेण तिधा किदा सत्ती। (ग)

(क) ततश्च देव। तत्र शरसहस्रसम्पातमवधूय किरीटिना गृहीता रथोत्सङ्गात् कणत्कनककिङ्किणीगणझङ्कारविराविणी, मेघोपरोधविमुक्तनभस्तलनिर्मला, निशितश्यामलस्निग्धमुखी, विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिः, सोपहास विमुक्ता च धनञ्जयेन कुमाराभिमुखम।

(ख) ततश्च देव। प्रज्वलन्ती शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात सशरं धनु', हृदयात् वीरसुलभ उत्साह', नयनात् वाष्पसलिल, वदनाद्धसितं, हसितञ्च धनञ्जयेन, सिंहनादो विनादितो वृकोदरेण च, दुष्कर दुष्करं दुष्करमित्याक्रन्दितं कुरुबलेन।

(ग) ततश्च देव। कुमारवृषसेनेन कर्णाकृष्टनिशितक्षुरप्रेण सुचिरं निर्ध्याय्य अर्द्धपथे एव भागीरथीव भगवता विषमलोचनेन त्रिधा कृता शक्तिः। "ता दधार हरो राजन्! गङ्गां गगनमेखलाम्। सा बभूव विसर्पन्ती त्रिधा राजन्! समुद्रगा॥" इति वनपर्वणि १०९ अध्याये।

दुर्य्यो। साधु वृषसेन ! साधु। ततस्ततः ?।

सुन्द। तदो अ देव ! एदस्सिं अंतरे किदकलअलमुहरेण वीरलोअसाहुवादेण अंतरिदो समरतूररवो, सिद्धचारणगणविमुक्कुसुमप्पअरेण पच्छादिदं समरंगणं। (क)

दुर्य्यो। अहो ! बालस्य पराक्रमः !! ततस्ततः ?।

सुन्द। तदो अ देव ! भणिअं सामिणा अंगराएण, भो विओदर ! असमत्तो तुह मह वि समरव्वावारो, ता अणुमण्ण मं मुहुत्तअं, पेक्खामहे दाव क्खणमेत्तं मह वच्छस्स तुह भादुणो धणुव्वेदसिक्खाणिउणत्तणं, तुह वि एदं पेक्खणिज्जं त्ति। तदो विरदा रणव्वावारणिव्वंधादो मुहुत्तअं पसमिदवेरा जादा दुवे अवि पेक्खआ भीमसेणअंगराआ। (ख)

दुर्य्यो। [ साभिप्रायम् ]। ततस्ततः ?।

सुन्द। तदो अ देव ! एदस्सिं अंतरे सत्तिखडगणारिसिदेण गंडीविणा एव्वं भणिदं, अरे रे दुज्जोहणप्पमुहा !—(ग)

[ इत्यर्द्धोक्ते लज्जां नाटयति ]।

दुर्य्यो। सुन्दरक ! कथ्यतां, परवचनमेतत्।

सुन्द। सुणादु देवो, अरे दुज्जोहणप्पमुहा कुरुबलसेणा-

(क) ततश्च देव ! एतस्मिन्नन्तरे कृतकलकलमुखरेण वीरलोकसाधुवादेनान्तरितः समरतूर्य्यरवः, सिद्धचारणगणविमुक्तकुसुमप्रकरेण प्रच्छादितं समराङ्गणम्।

(ख) ततश्च देव। भणितं स्वामिना अङ्गराजेन, भो वृकोदर। असमाप्तस्तव ममापि समरव्यापारः, तदनुमन्यता मां मुहूर्त्तं, प्रेक्षामहे तावत् क्षणमात्रं मम वत्सस्य तव भ्रातुर्धनुर्वेदशिक्षानिपुणत्वं, तवाप्येतत् प्रेक्षणीयमिति। ततो विरतौ रणव्यापारनिर्बन्धात् मुहूर्त्तं प्रशमितवैरौ जातौ द्वावपि प्रेक्षकौ भीमसेनाङ्गराजौ।

(ग) ततश्च देव ! एतस्मिन्नन्तरे शक्तिखड्गनाराचवर्षितेन गाण्डीविना एवं भणितम्, अरे रे दुर्य्योधनप्रमुखाः !—

पहुणो! अरे अविणअमहाइकण्णधार! कधं! तुह्मेहिं मह परोक्खं एआइ पुत्तओ अहिमञ्जु वावादिदो, अहं उण तुह्माणं पेक्खंताणं एव्व कुमालविससेणं सुमरिदव्वसेसं (१) करोमि, त्ति भणिअ सगव्वं आप्फालिदं अणेण णिग्घादघोस-भीसणजीआरवं गंडीवं, सामिणा वि सज्जीकिदं काल-पिट्ठम्। (क)

दुर्य्यो। [ सावहित्थम् ]। ततस्ततः ?।

सुन्द। तदो अ देव! एदस्सिं अंतरे पडिसिद्धभीमसेण-समलकम्मालंभेण गंडीविणा विरइदा अंगराअविससेणरह-कूलंकसे दुवे बाणणदीओ। तेहिं वि दुवेहिं अण्णोण्णसिणेह-दंसिदसिक्खाविसेसेहिं अभिजुत्तो मज्झमपंडवो। (ख)

दुर्य्यो। ततस्ततः ?।

सुन्द। तदो अ देव! गंडीविणा ताररसिदजीआणिग्घोस-

(१) स्मर्तव्यं स्मरणं, भावे तव्यः, तत् शेषो यस्य स्मरणीयमात्रं, न तु दर्शनीयमित्यर्थः।

(क) शृणोतु देवः, अरे दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः! अरे अविनय-महौकर्णधार। कथं! युष्माभिः मम परोक्षम् एकाकी पुत्रकः अभिमन्युः व्यापादितः, अहं पुनर्युष्माकं प्रेक्षमाणानाम् एव ( प्रेक्षमाणाननादृत्य "षष्ठी चानादरे" २। ३। ३८ पा० सू० अनादरे षष्ठी ) कुमारवृषसेनं स्मर्तव्यशेषं करोमि, इति भणित्वा सगर्व-मास्फालितम् अनेन निर्घातघोषभीषणज्यारवं गाण्डीवं, स्वामिनाऽपि सज्जीकृतं कालपृष्ठम्। ( कर्णधनुषो नाम )।

(ख) ततश्च देव! एतस्मिन्नन्तरे प्रतिविद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विरचिते अङ्गराजवृषसेनरथकूलङ्कषे द्वे बाणनद्यौ। ताभ्यामपि द्वाभ्यामन्योऽन्य-क्षेपदर्शितशिक्षाविशेषाभ्यामभियुक्तो मध्यमपाण्डवः।

मेत्तविसादबाणवरिसेण तह आअरिदं पत्तिहिं, जह ण णह-त्तलं, ण सामी, ण रहो, ण धरणी, ण कुमालो, ण केदुवंसो, ण बलाइ, ण सारही, ण तुलंगमो, ण दिसाओ, ण वीरलोओ अ संलक्खोअदि। (क)

दुर्य्यो। [ सविस्मयम् ]। ततस्ततः ?।

सुन्द। तदो अ देव ! क्खणमेत्तं एव्व अदिक्कंते सरसंपादे सहरिससिंहणादे पंडवसेसे, सविसादविमुक्काक्कंदे कौरव-बले समुत्थिदो महंतो कलअलो, हा !! हदो कुमालविससेणो त्ति। (ख)

दुर्य्यो। [ सवाष्परोषम् ]। ततस्ततः ?।

सुन्द। तदो अ देव! कुमालं हदसारहितुलंगं लूणा-दवत्तचावचामरकेदुवंसं सग्गप्पब्भट्टं विअ सुलकुमालं हिअअ-मम्मभेदिणा एक्केण सिलीमुहेण भिण्णदेहं रहमज्झे पल्लत्थं पेक्खिअ अहं आअदो। (ग)

दुर्य्यो। [ सास्रम् ]। अहह कुमारवृषसेन ! अलमतः परं श्रुत्वा। हा वत्स वृषसेन ! हा मदङ्कदुर्ललित ! हा मदाज्ञाकर !

(क) ततश्च देव ! गाण्डीविना तारस्वितज्यानिर्घोषमात्रविज्ञातबाणवर्षेण (बाणवर्षाणां शीघ्रत्वात् सन्धानादि न विभावितं, किन्तु ज्याऽऽघातेन बाणवर्षोऽनुमित इत्यर्थः) तथाऽऽचरितं पत्रिभिः, यथा न नभस्तलं, न स्वामी, न रथः, न धरणी, न कुमारः, न केतुवंशः, न बलानि, न सारथिः, न तुरङ्गमः, न वीरलोकश्च संलक्ष्यते।

(ख) ततश्च देव ! क्षणमात्रमेवातिक्रान्ते शरसम्पाते सहर्षसिंहनादे पाण्डव-सैन्ये, सविषादविमुक्ताक्रन्दे कौरवबले समुत्थितो महान् कलकलः, हा !! हतः कुमारवृषसेन इति।

(ग) ततश्च देव। कुमारं हतसारथितुरङ्गं लूनातपत्रचापचामरकेतुवंशं स्वर्ग-प्रभ्रष्टमिव सुरकुमारं हृदयमर्मभेदिना एकेन शिलीमुखेन भिन्नदेहं रथमध्ये पर्य्यस्तं प्रेक्ष्य अहमागतः।

हा गदायुद्धप्रिय! हा शौर्य्यसागर! हा राधेयकुलप्ररोह! हा प्रियदर्शन! हा दुःशासननिर्विशेष! हा सर्वगुरुवत्सल! प्रयच्छ मे प्रतिवचनम्।

(१) पर्य्याप्तनेत्रमचिरोदितचन्द्रकान्तम्
उद्भिद्यमाननवयौवनरम्यशोभम्।
प्राणापचारपरिवर्त्तितदृष्टि दृष्टं
कर्णेन तत् कथमिवाननपङ्कजं ते?॥

सूत। आयुष्मन्! अलमत्यन्तशोकावेगेन।

दुर्य्यो। सूत! पुण्यवन्तो हि दुःखभाजो भवन्ति, अस्माकं पुनः,—

(२) प्रत्यक्षं हतबन्धूनामेतत् परिभवाग्निना।
हृदयं दह्यतेऽत्यर्थं कुतो दुःखम्? कुतो व्यथा?॥

[इति मोहमुपगतः]।

सूत। समाश्वसितु समाश्वसितु महाराजः।

[इति पटान्तेन वीजयति]।

दुर्य्यो। [लब्धसंज्ञः]। भद्र सुन्दरक! वयस्येन किं प्रतिपन्नमङ्गराजेन?।

---

(१) पर्य्याप्तं सम्पूर्णं, दीर्घमिति यावत्, नेत्रं यस्य, अचिरोदितः नवोदितः, चन्द्र इव कान्तम्, उद्भिद्यमानेनाविर्भवता, नवयौवनेन रम्या शोभा यस्य तत्, प्राणानामपचारे वियोगे, तत्काले इत्यर्थः, परिवर्त्तिता अन्यथाभूता, दृष्टिर्दर्शनं यस्य एतादृशं, तव मुखाब्जं कर्णेन कथं दृष्टम्? रम्यवस्तुनो मरणकाले विकृतिभावेन तद्दर्शनं बन्धूनामतीव दुःखदायकत्वमिति भावः। वसन्ततिलकं वृत्तम्।

(२) प्रत्यक्षम् अक्ष्णः समीपे, हतबन्धूनां शत्रुभिर्हतस्वजनानाम्, अस्माकमित्यन्वयः, परिभव एव अग्निस्तेन बन्धुमरणजन्यतिरस्काररूपाग्निना, एतत् हृदयं दह्यते, एवञ्च हृदयस्याधारस्य दाहे कुतस्तत्र दुःखव्यथयोः स्थितिः? अनेनात्यन्तदुःखभारो दर्शितः।

सुन्द। तदो अ देव! तधाहदस्स पुत्तस्स दंसणेण संगलिदं अस्सुजलं उज्झिअ अणवेक्खिदपरप्पहरणेण सामिणा अंगराएण अभिजुत्तो धणंजओ। तदो तं अ सुदवहामरिसिदं विमुक्कजीविदासं तधा परिक्कमंतं पेक्खिअ भीमणउलसहदेवपंचालप्पमुहेहिं अंतरिदो धणंजअस्स रहो। (क)

दुर्यो। ततस्ततः?।

सुन्द। तदो अ अज्जुणचावमहाप्पलअपओधरणिपडिदसरधारासहस्सेहिं पूरिदेसु दिसामुहेसु सल्लेण भणिदो सामी अंगराओ, जहा, अंगराअ! हदतुरंगमो मथिदचक्कणेमिकूबरो दे रहो, ता ण जुत्तं भीमज्जुणेहिं अहिजुज्जिदुं, त्ति भणिअ णिवट्टिदो रहो, ओदारिदो सामी सन्दणादो, बहुप्पआरं अ अस्सासिदो। (ख)

दुर्यो। ततस्ततः?।

एवञ्चाकालमृत्युभागित्वात् दुःखभागित्वमपि नेति यत् पुण्यवतो दुःखभागित्वम् उक्तं तत्त्वमर्थितमिति वेदितव्यम्। पथ्यावक्त्रं वृत्तम्।

(क) ततश्च देव। तथाहतस्य पुत्रस्य दर्शनेन सङ्कलितमस्रुजलमुज्झित्वा अनपेक्षितपरप्रहरणेन स्वामिना अङ्गराजेनाभियुक्तो धनञ्जय। ततस्तञ्च सुतवधामर्षितं विमुक्तजीविताशं तथा परिक्रामन्तं प्रेक्ष्य भीमसेननकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनञ्जयस्य रथः। अन्तरितः व्यवहितः।

(ख) ततश्च अर्जुनचापमहाप्रलयपयोधरविनिःसृतशरधारासहस्रपूरितेषु दिङ्मुखेषु शल्येन भणितः स्वाम्यङ्गराजः, यथा, अङ्गराज! हततुरङ्गमो मथितचक्रनेमिकूबरस्ते रथः, तन्न युक्तं भीमार्जुनाभ्यामभियोक्तुम्, इति भणित्वा निवर्तितो रथः, अवतीर्णः स्वामी स्यन्दनात्, बहुप्रकारश्च आश्वासितः। "कूबरोऽस्त्री युगन्धरः" इत्यमरः।

सुन्द। तदो अ सामिणा सुइरं विलंबिअ परिअणो अभिहिदो, अस्सं रहं मे उवणेहि त्ति। परिअणोवणीदं अस्सं रहं पेक्खिअ मइ दिण्णदिट्ठी सुंदरअ! एहि त्ति भणिदं अ, अहं वि उवगदो समीवं। तदो अवणीअ सीसट्ठाणादो पट्टिअं सरीरसंगलिदेहिं सोणिअबिंदूहिं दिण्णअक्खरं बाणं कदुअ आलिहिदो एसो देवस्स सलेहो। (क) [ इति पत्रिकामर्पयति ]।

दुर्यो। [ गृहीत्वा वाचयति ]। यथा स्वस्ति महाराज दुर्य्योधन! समराङ्गणात् कर्ण एतदन्ते कण्ठे गाढमालिङ्ग्य विज्ञापयति—

(१) अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमान्
भ्रातृभ्योऽपि ममाधिकोऽयमसुना जेयाः पृथासूनवः।
त्वत्सम्भावित इत्यहं न च हतो दुःशासनारिर्मया
त्वं दुःखप्रतिकारमेहि भुजयोर्वीर्य्येण बाष्पेण वा॥

(१) इति अनेन पूर्वार्द्धकथितप्रकारेण, अहं सम्भावितः अध्यवसितः; एवं सम्भावितेन मया पुनः दुःशासनारिरपि न निहतः, तथा च दुःशासनस्य बाष्पं न कृतं, नापि तद्वक्तःशोणितपानप्रतीकारोऽपि कृतः, तथा च जीवता मया तव न किमपि कृतमित्यर्थः, इदानीं त्वं स्वयमेव भुजयोः वीर्य्येण बाष्पेण वा दुःखप्रतीकारम् एहि कुरु इत्यर्थः; एतेनात्मनो निर्वेदो दर्शितः, निर्वेदाच्च मरणाध्यवसाय इति ध्वनितम्। शार्दूलविक्रीडितं वृत्तम्।

(क) ततश्च स्वामिना सुचिरं विलम्ब्य परिजनोऽभिहितः, अन्यं रथं मे उपनयेति। परिजनोपनीतमन्यं रथं प्रेक्ष्य मयि दत्तदृष्टिः सुन्दरक! एहीति भणितश्च, अहमप्युपगतः समीपम्। ततोऽपनीय शीर्षस्थानात् पट्टिकां शरीरसङ्गलितैः शोणितबिन्दुभिः दत्ताक्षरं बाणं कृत्वा अभिलिखित एष देवस्य संलेखः।

दुर्य्यो। वयस्य! कर्ण! कर्ण! किमिदं हतभ्रातृशतं मामपरेण वाक्शल्येन घट्टयसि?। भद्र! सुन्दरक! अथेदानीं किमारब्धोऽङ्गराजः?।

सुन्द। देव! अवणीदसरीरावरणो (१) भप्पवहकिदणिव्व-णिव्वणा सअं एव्व समलं मग्गदि। (क)

दुर्य्यो। [श्रुत्वा सत्वरमुत्तिष्ठन्]। सुन्दरक! त्वमपि मद्वचनात् त्वरिततरं गत्वा वयस्यमङ्गराजं प्रबोधय, न खलु जयाकाङ्क्षी भवानिदानीम्, अभिन्न एवायमावयोः सङ्कल्पः, किन्तु—

(२) हत्वा पार्थान् सलिलमशिवं बन्धुवर्गाय दत्त्वा
मुक्त्वा बाष्पं सह कतिपयैर्मन्त्रिभिश्चारिभिश्च।
कृत्वाऽन्योऽन्यं सुचिरमपुनर्भावि गाढोपगूढं
सन्त्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ वा॥

अथवा शोकं प्रति मया न किञ्चित् सन्देष्टव्यम्।

---

(१) अपनीतमपसारितं, शरीरावरणं शरीराच्छादकं कवचं येन, अथवा अपनीतशरीररक्षकः, मरणोद्यतस्य शरीररक्षणे यत्नाभावात्।

(२) अशिवममङ्गलम्, अन्त्येष्टिसमये देयं जलं दत्त्वा जलेन तर्पयित्वेत्यर्थः, अस्माकं दुःखेन दुःखितैर्मन्त्रिभिरारिभिः तेषामपि स्ववर्गीयनाशात् समानदुःखैः शत्रुभिश्च सह, बाष्पं मुक्त्वा अपुनर्भावि जन्मान्तरे स्वस्वकर्मानुसारेण विभिन्नस्थान-विभिन्नजातिप्राप्त्या पुनः असम्भावनीयं, गाढोपगूढं दृढालिङ्गनम्, अन्योऽन्यं सुचिरं कृत्वा दुःखितौ हतबान्धवशोकेन सन्तप्तौ, निर्वृतौ तद्दुःखप्रतीकारकरणेन तृप्तौ सन्तौ, इमां शोकव्याकुलां, हततनुं सन्त्यक्ष्यावः, नेदानीम्, अधुना वैरनिर्यातनाया अवश्यकर्त्तव्याया अवशिष्टत्वान्न तनुमोचनमुचितम् इति भावः। मन्दाक्रान्ता वृत्तम्।

---

(क) देव! अपनीतशरीरावरणः भ्रातृवधजनितनिर्वेदः स्वयमेव समरं प्रार्थयते।

वृषसेनो न ते पुत्त्रो न मे दुःशासनोऽनुजः ।
त्वां बोधयामि किमहम् ? त्वं मां संस्थापयिष्यसि ? (१) ॥

सुन्द । जं देवो आणवेदि (क) । [ इति निष्क्रान्तः ] ।

दुर्य्यो । अये ! नेमिध्वनिरिव ? ।

सूत । आयुष्मन् ! एष सद्य एव संवर्द्धितो नेमिध्वनिः । (२)

दुर्य्यो । नूनं परिजनोपनीतो रथः, गच्छ त्वं, सज्जीकुरु ।

सूत । यथाऽऽज्ञापयति देवः । [ इति निष्क्रम्य पुनः प्रविशति ] ।

दुर्य्यो । [ विलोक्य ] । किमिति नारूढोऽसि ? ।

सूत । एष खलु तातोऽम्बा च सञ्जयेनाधिरूढौ (३) देवदर्शनमनुप्राप्तौ ।

दुर्य्यो । कष्टम् !! अतिबीभत्सम् (४) आचरितं देवेन । सूत ! गच्छ त्वं, स्यन्दनं तूर्णमुपहर, अहमपि तातदर्शनं परिहरन्नेकान्ते तिष्ठामि ।

सूत । देव ! त्वदेकशेषबान्धवावेतौ कथमिव न समाश्वासयसि ? ।

दुर्य्यो । सूत ! कथमिव समाश्वासयामि विमुखभागधेयः ? । पश्य—

(१) संस्थापयिष्यसि सान्त्वयिष्यसि । पथ्यावक्त्रं वृत्तम् ।

(२) एष श्रूयमाणः, नेमिध्वनिः रथचक्रशब्दः, सद्य एव श्रवणोत्तरकाल एव, संवर्द्धितः क्रमेण उपचितः, ध्वनिहेतोः क्रमशः सन्निहितत्वात् ध्वनिः क्रमेण पुष्ट इत्यर्थः, तथा च रथ क्रमशः सन्निहितो भवतीत्याशयः ।

(३) सञ्जयेन सह रथमधिरूढौ अम्बातातौ ।

(४) अतिबीभत्सम् अतिनिन्दितम्, जुगुप्सितमिति यावत् ।

(क) यद्देव आज्ञापयति ।

यद्येवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
प्रातस्ताभ्यां शिरसि विनतोऽहञ्च दुःशासनश्च ।
तस्मिन् बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरहमुपगतः किन्नु वक्ष्यामि ताभ्याम् ? ॥ (१)

तथाऽप्यवश्यं वन्दनीयौ गुरू । [ इति निष्क्रान्तौ ] ।

इति चतुर्थोऽङ्कः ।

---

## पञ्चमोऽङ्कः ।

[ ततः प्रविशति रथयानेन गान्धारी सञ्जयो धृतराष्ट्रश्च ] ।

धृत । वत्स ! सञ्जय ! कुरुकुलकाननैकशेषप्रवालो (२) मे वत्सो दुर्य्योधनः कच्चित् जीवति वा ? न वा ? ।

गान्धा । जाद ! जइ सच्चं जीवदि वच्छो, ता कस्सिं कधेहि तं उद्देसम् ? । (क)

सञ्ज । नन्वेष महाराज एक एव न्यग्रोधच्छायायाम् उपविष्टस्तिष्ठति ।

---

(१) प्रापिते जीविते तस्मिन् दुःशासने तथाविधां शोणितपानार्थवक्षोविदारणरूपाम् । मन्दाक्रान्ता वृत्तम् ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वेणीसंहारनाटकव्याख्याने सुन्दराख्ये चतुर्थाङ्कव्याख्या ।

---

(२) कुरुकुलेति ।—कुरुकुलमेव काननं वनं, तस्य एकः अद्वितीयः, शेषः अवशिष्टः, प्रवालः पल्लवः ।

---

(क) जात ! यदि सत्यं जीवति वत्सः, तत् कस्मिन् कथय तमुद्देशम् ? ।

गान्धा। जाद! एआइ त्ति भणासि, किं ण क्खु संपदं तस्स भादुसदं पासे णत्थि ?। (क)

सञ्ज। तात! अम्ब! अवतरतं स्वैरं रथात्।

[ उभौ अवतरणं नाटयतः ]।

[ ततः प्रविशति सव्रीडोपविष्टो दुर्योधनः ]।

सञ्ज। [ उपसृत्य ]। विजयतां महाराजः; नन्वेष तातोऽम्बया सह प्राप्तः, किं न पश्यसि महाराज ! ?।

दुर्यो। [ वैलक्ष्यं नाटयति ]।

धृत। (१) शल्यानि व्यपनीय कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णे कृतापाश्रयः।
दूरान्निर्जितशात्रवान् नरपतीनालोकयन् लीलया
सह्या पुत्रक ! वेदनेति न मया पापेन पृष्टो भवान्॥

(१) कङ्कटे कवचे, उन्मोचिते देहादपसारिते, कङ्कस्य पक्षिविशेषस्य, वदनमिव वदनं येषां तैः कुटिलाग्रैः, शल्योद्धारणयन्त्रभेदैः, शल्यानि शस्त्राग्रस्थफलकानि, अनैर्व्यपनीय अपसार्य, शस्त्रक्षतशोषणार्थं व्रणपट्टकेषु व्रणशोषकौषधद्रव्यलिप्तपटखण्डेषु "पटी" इति प्रसिद्धेषु नद्धेषु, कर्णे कर्णनाम्नि व्यपाश्रये, अनेन च सहायान्तराभावेऽपि नोत्साहहानिरिति सूचितम्, हे पुत्रक ! दुःखितत्वादनुकम्पार्थे कः, अनुकम्पितसुत ! वेदना शल्योद्धारणकृता पीडा, सह्या सोढुं शक्या, त्वयेति शेषः, इति पापेन अनुकृतपुत्रनाशात् दुर्भाग्यवता, मया भवान् न पृष्टः, पापेन मयेत्यनेन चात्मनः पुत्रशतनाशजन्यदुःखशल्यानि अधुनाऽपि हृदयेऽवस्थितानि, तानि च सह्यानीति प्रतिदर्शनेन बहुतरशल्यवेदनासहनं सुकरमिति ध्वनितम्, तस्य दुःखासहनाभावे हेतुं वदन् विशिनष्टि, निर्जितशात्रवान् पराभूतरिपून्, लीलया अवज्ञयैव, दूरादालोकयन्, तथा च यदि वेदना न सह्या तदा कुतोऽयमपि अवज्ञा ? इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(क) जात! एकाकीति भणसि, किन्नु खलु साम्प्रतं तस्य भ्रातृशतं पार्श्वे नास्ति ?।

[ धृतराष्ट्रो गान्धारी च स्पर्शेनोपेत्य आलिङ्गत: ]।

गान्धा। वच्छ! अदिगाढ़प्पहारवेअणापज्जाउलस्स अच्छेसु वि ण दे प्पसरदि वाणी ?। (क)

धृत। वत्स दुर्य्योधन! किमकृतपूर्वः सम्प्रति मय्यपि अयमव्याहार: ?। (१)

गान्धा। वच्छ! जइ तुमं वि अह्मे णालवसि, किं दाणीं दुस्सासणो दुम्मरिसणो अण्णो वा आलविस्सदि ? (ख)। [ इति रोदिति ]।

दुर्य्यो। (२) पापोऽहमप्रतिकृतानुजनाशदर्शी
तातस्य बाष्पपयसां तव चाम्ब! हेतुः।
दुर्जातमत्र विमले भरतान्वयेऽपि
किं मां सुतक्षयकरं सुत इत्यवैषि ?॥

गान्धा। जाद! अलं परिदेविदेण, तुमं वि दाव एक्को अंधजुअलस्स मग्गोवदेसओ चिरं जीव, किं मे रज्जेण वेरेण वा ?। (ग)

(१) पूर्वं न कृत: अकृतपूर्वः, अव्याहार: मौनितेति यावत्।

(२) पाप इति।—अम्ब! हे मातः! अहम् अप्रतिकृतम् अनुजानां नाशं दृष्टवानिति तथाविधः, पापः दुराचारः, तातस्य पितुः, तव च बाष्पपयसाम् अश्रुजलानां, हेतुः कारणम्, अतः अत्र विमले निष्कलङ्केऽपि, भरतान्वये भारते कुले, दुर्जातं दुर्लक्षणत्वेनोत्पन्नं, सुतक्षयकरं पुत्रनाशहेतुं, मां किं कथं, सुत इति पुत्र इति, अवैषि ? अवगच्छसि ?। वसन्ततिलकं वृत्तम्।

(क) वत्स! अतिगाढप्रहारवेदनापर्य्याकुलस्य अक्ष्णोरपि न ते प्रसरति वाणी ?।

(ख) वत्स! यदि त्वमप्यस्मान् नालपसि, किमिदानीं दुःशासनो दुर्मर्षणोऽन्यो वा आलपिष्यति ?। तेषामभावात् कः पुनरालपिष्यति ? इत्यर्थः।

(ग) जात! अलं परिदेवितेन, त्वमपि तावदेकोऽन्धयुगलस्य मार्गोपदेशकश्चिरं जीव, किं मे राज्येन वैरेण वा ?।

दुर्य्यो। (१) मातः! किमप्यसदृशं विकृतं वचस्ते
सुक्षत्रिया क्व भवती? क्व च दीनतैषा?।
निर्वत्सले! सुतशतस्य विपत्तिमेतां
त्वं नानुचिन्तयसि रक्षसि मामयोग्यम्॥

नूनं विचेष्टितमिदं सुतशोकस्य।

सञ्ज। महाराज! किं वा अयं लोकवादो वितथः, (२) न घटस्य कूपपाते रज्जुरपि तत्र प्रक्षेप्तव्येति?।

दुर्य्यो। अपुष्कलमिमं ननु उपक्रियमाणाभावे (३) किमुपकरणेन?। [ इति रोदिति ]।

धृत। [ दुर्य्योधनं परिष्वज्य ]। वत्स! समाश्वसिहि, समाश्वासय चास्मान् इमामतिदीनां मातरञ्च।

दुर्य्यो। तात! दुर्लभः समाश्वास इदानीं युष्माकं, किन्तु—
(४) कुन्त्या सह युवामद्य मया निहतपुत्रया।
विराजमानौ शोकेऽपि तनयाननुशोचतम्॥

---

(१) मातरिति।—हे मातः। ते तव, असदृशम् अयुक्तम्, अत एव विकृतं विपरीतं, किमपि वचः वाक्यं, सुक्षत्रिया महाराजवंश्या महाराजमहिषी चेत्यर्थः, भवती क्व? एषा दीनता कातरता च, क्व? न हि त्वादृशी दैन्यमवलम्बते इति भावः, निर्वत्सले। हे वात्सल्यरहिते। त्वं सुतशतस्य एतां विपत्तिं विध्वंसं, न अनुचिन्तयसि न भावयसि, अयोग्यम अपात्रं, मां रक्षसि। वसन्ततिलकं वृत्तम्।

(२) वितथः निरर्थकः।

(३) अपुष्कलम् असम्यक्। उपक्रियमाणाभावे उपकरणीयानां वस्तूनाम् अभावे नाशे।

(४) मया निहताः पुत्राः यस्यास्तादृश्या कुन्त्या सह विराजमानौ तुल्यदुःखतया स्पर्द्धया वा प्रकाशमानौ, युवां सुतान् अनुशोचतं, युवयोः पुत्रा यथा तत्पुत्रेण निहताः, एवं तत्पुत्रा अपि युवयोः पुत्रेण मया निहता इति विचिन्त्य शोकेऽपि चित्तस्थैर्य्यमाधत्तामिति भावः। पथ्यावक्त्रं वृत्तम्।

गान्धा। जाद! एदं एव्व संपदं प्पभूदं जा तुमं बि दाव एक्को जीवसि, कं अस्स अणुसोइस्स? ता जाद! अकालो दे समरस्स, प्पसीदो, एसो दे अंजली, णिवट्टेहि समर-व्वावारादो, (१) अपच्छिमं करेहि वअणम्। (क)

धृत। वत्स! शृणु वचनं तवाम्बायाः मम च निहताशेष-बन्धुवर्गस्य। पश्य—

(२) दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमयतो भीतं जगत् फाल्गुनात्।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात! पितरावन्धाविमौ पालय॥

दुर्यो। समरात् प्रतिनिवृत्य किं मया कर्त्तव्यम्?।

गान्धा। जं पिदा दे विदुरो वा भणिस्सदि तं अणु-चिट्ठ। (ख)

---

(१) वचनम् अपश्चिमम् अपृष्ठगतं, पुरोगतं, पूज्यमिति यावत्, कुरु।

(२) ययोर्बलेन दायादाः ज्ञातयः, न गणिताः अवज्ञाताः, तौ; कर्णस्येत्यत्रापि ययोरिति विपरिणमय्यान्वेतव्यं, यस्य कर्णस्य बलेन न गणिता इत्यर्थः, तस्य कर्णस्यात्मजं पुत्रं वृषसेनं, तदग्रत एव शमयतः नाशयतः, ततश्च येन तावत् स्वपुत्ररक्षणमेव कर्तुं न शक्तं तव जयाशा दुर्घटेति भावः, मम शतपुत्रनाशने प्रतिज्ञावान् रिपुः अन्येषां मम वत्सानां निधनेन नाशनेन हेतुना, त्वयि त्वद्विषये एव, अवशिष्टप्रतिज्ञः, अतः वैरिषु मानं गर्वम्, "अहमेव तेभ्यः सर्वथा गरीयान्" इति बुद्धिं, मुञ्च, तत्त्यागे फलमाह, इमौ अन्धौ, पालय वाक्यपालनेन युद्धाकरणेन आत्मरक्षणेन च पालयेत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

---

(क) जात! एतदेव साम्प्रतं प्रभूतं यत्त्वमपि तावदेको जीवसि, कमन्यमनुशोचिष्यामि? तज्जात! अकालस्ते समरस्य, प्रसीद, एष ते अञ्जलिः, निवर्त्तस्व समरव्यापारात्, अपश्चिमं कुरु वचनम्।

(ख) यत् पिता ते विदुरो वा भणिष्यति तदनुतिष्ठ।

सञ्ज। राजन्! एवमिदम्।

दुर्यो। सञ्जय! अद्याप्युपदेष्टव्यमस्ति?।

सञ्ज। राजन्! यावत् [ *प्राणितव्य तावदुपदेष्टव्यभूमयो विजिगीषवः ] प्रज्ञावताम्।

दुर्यो। [ सक्रोधम् ]। शृणुमस्तावत् प्रज्ञावतः सम्प्रत्यनुरूपमुपदेशम्।

धृत। वत्स! युक्तवादिनि सञ्जये किमत्र क्रोधेन? यदि प्रकृतिमापद्यसे तदहमेव [ † कथयामि, श्रूयताम् ]।

दुर्यो। कथयतु तातः।

धृत। वत्स! किं विस्तरेण, सन्धत्तां भवानिदानीं युधिष्ठिरस्य समीप्सितेन पणेन (१)।

दुर्यो। तात! तनयस्नेहवैक्लव्यादम्बा, बालिशत्वात् (२) सञ्जयश्च काममेवं ब्रवीतु, युष्माकमप्येवं व्यामोहः?। अथवा प्रभवति पुत्रनाशजन्मा हृदयज्वरः। (३) तात! अस्खलितभ्रातृशतः, तदाऽवधीरितवासुदेवशमोपन्यासः, सम्प्रति हतपितामहाचार्य्यानुजराजचक्रविपत्तिः शरीरमात्रस्नेहात् उदात्तपुरुषव्रीडावहम् (४) असुखावसानञ्च कथमिव करिष्यति दुर्य्योधनः सह पाण्डवैः सन्धिम्?। अन्यच्च नयवेदिन्! सञ्जय!—

---

(१) सन्धत्तां सन्धिः क्रियताम्। समीप्सितेन अभिलषितेन, पणेन इन्द्रप्रस्थादिपञ्चग्रामरूपमूल्येनेति भावः।

(२) बालिशत्वात् निर्बोधत्वात्।

(३) हृदयज्वरः मनस्तापः।

(४) उदात्तानामुत्तमानां, पुरुषाणां व्रीडावहं लज्जाकरम्।

---

* [ प्राणानाशस्तावदुपदेष्टव्या नृपतयः ] क्वचिदित्यपि पाठः।

† [ भवन्तं ब्रवीमि ] इत्यपि क्वचित् पाठः।

(१) हीयमानाम् किल रिपून् नृपाः सन्दधते कथम् ?।
दुःशासनेन हीनोऽहं सानुजः पाण्डवोऽधुना ॥

सूत। वत्स! एवं-गतोऽपि मत्प्रार्थनया किं न करोति युधिष्ठिरः ?। अन्यच्च [ * सर्वं दैवापकृष्टं (२) मन्यते ] युधिष्ठिरः।

दुर्यो। कथमिव ?।

सूत। श्रूयतां, प्रतिज्ञा युधिष्ठिरस्य, नाहमेकस्यापि भ्रातुः विपत्तौ प्राणान् सन्धारयामीति, बहुच्छलत्वात् सङ्ग्रामस्यानुजनाशं शङ्कमानो यथैव भवते (३) रोचते तथैवासौ शक्तः सन्धातुम्।

सञ्ज। एवमिदम्।

गान्धा। उपपत्तिजुत्तं प्पडिवज्जस्स पिदुणो वअणम्। (क)

---

(१) हीयमानानिति।—नृपाः राजानः, हीयमानान् क्षयं गच्छत इत्यर्थः, रिपून् शत्रून्, कथं सन्दधते किल ? नैव हीनैः सह सन्धिं कुर्वते इत्यर्थः, अधुना अहं दुःशासनेन हीनः, पाण्डवः युधिष्ठिरः, सानुजः अनुजैः सह वर्त्तमानः, अतः कथं स मया सह सन्धिं करिष्यति ? अतस्तदर्थं यत्नो विफल इति भावः। पथ्यावक्त्रं वृत्तम्।

(२) सर्वं दैवापकृष्टं दैवाधीनम्। सर्वंदैवापकृष्टमिति पाठे—भवद्भ्य इति शेषः, तथा च तव्याहङ्कारित्वाभावात् सर्वत एवात्मापकर्षध्यानं, किं पुनर्भवद्भ्यः ?। पाठान्तरे—सर्वमेवापकृतं भवद्भिः भवतां कृतमपकारं, न मन्यते नानुस्मरतीत्यर्थः।

(३) भवते इति "रुच्यर्थानां प्रीयमाणः" [ १।४।३३ पा० सू० ] सम्प्रदानसंज्ञायां चतुर्थी।

---

(क) उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम्।

---

* [ सर्वमेवापकृतं न मन्यते भवद्भिः ]। इत्यपि पाठः।

दुर्य्यो। तात! अम्ब! सञ्जय!—

(१) एकेनापि विनाऽनुजेन मरणं पार्थः प्रतिज्ञातवान्
भ्रातॄणां निहते शते विषहते दुर्य्योधनो जीवितुम्?।
तं दुःशासनशोणिताशनमरिं भिन्दन् गदाकोटिभिः
भीमं दिक्षु न विक्षिपामि? कृपणः सन्धिं विदध्यामहम्?॥

गान्धा। हा जाद दुस्सासण! हा दुम्मरिसण! हा विकस्स! हा!! [वीरसदप्पसविणी गांधारी दुक्खसदं प्पसूदा, न सुदसदम्*]। (क) [सर्वे रुदन्ति]।

सञ्ज। [वाष्पमुत्सृज्य]। तात! प्रतिबोधयितुं महाराजमिमां भूमिं युवामागतौ, तदात्मापि तावत् संस्तभ्यताम्।

धृत। वत्स! एवं विमुखेषु भागधेयेषु त्वयि चामुञ्चति (२) मानवस्यमरिषु त्वदेकशेषजीविताबलम्बना (३) इयं तपस्विनी गान्धारी कमवलम्बतां शरणम्? अहञ्च?।

(१) एकेनापीति।—पृथायाः अपत्यं पुमान् पार्थः युधिष्ठिरः, एकेनापि अनुजेन विना एकस्यापि अनुजस्य विपत्ताविल्यर्थः, मरणं प्रतिज्ञातवान् एकोऽपि मे भ्राता यदि म्रियते तदाऽहं मरिष्यामीति प्रतिज्ञां कृतवानित्यर्थः, दुर्य्योधनः भ्रातॄणां शते निहते, अपिरवाध्याहार्य्यः, जीवितुं विषहते? इच्छति? इति यावत्, अहं दुःशासनशोणिताशनं दुःशासनस्य रक्तपायिनं, तम् अरिं शत्रुं भीमं, गदाकोटिभिः गदाऽग्रभागैः, भिन्दन् प्रहरन्, दिक्षु न प्रक्षिपामि? कृपणः दीनः सन्, सन्धिं विदध्याम? कुर्य्याम्? शार्दूलविक्रीडितं वृत्तम्।

(२) अमुञ्चति अत्यजति।

(३) त्वदेकेति।—त्वमेव एकः शेषः जीविताबलम्बनं यस्याः तादृशी।

(क) हा जात दुःशासन! हा दुर्म्मर्षण! हा विकर्ण! हा!! वीरशतप्रसविनी गान्धारी दुःखशतं प्रसूता, न सुतशतम्।

* [असुदपुव्वा कस्स वि लोए इदिसी विपत्ती]।
अश्रुतपूर्वा कस्यापि लोके ईदृशी विपत्तिः। इत्यपि पाठः।

दुर्यो। श्रूयताम्—

(१) कलितभुवना भुक्तैश्वर्य्यास्तिरस्कृतविद्विषः
प्रणतशिरसां राज्ञां चूडासहस्रकृतार्चनाः।
अभिमुखमरीन् घ्नन्तः सङ्ख्ये हताः शतमात्मजाः
वहतु सगरेणोढां तातो धुरं सहितोऽम्बया॥

विपर्य्यये त्वस्याधिपतेरुल्लङ्घितः क्षात्रधर्मः (२) स्यात्।

[नेपथ्ये महान् कलकलः]।

गान्धारी। [आकर्ण्य सभयम्]। संजअ! किं एदं हाहाकारमिस्सं तूररमिदं सुणीअदि?। (क)

सञ्ज। अभूमिरियमेवंविधानां भीरुजनानाम्।

धृत। वत्स सञ्जय। ज्ञायताम्, अतिभैरवः खलु विस्तारो हाहारवः, कारणेनास्य महता भवितव्यम्।

दुर्यो। तात! प्रसीद, पराङ्मुखं खलु दैवमस्माकं,

---

(१) कलितेति।—कलितं रचितं, भुवनं जगत् यैः तथोक्ताः, पालितराज्या इत्यर्थः, भुक्तम् ऐश्वर्य्यं यैः, कृतैश्वर्य्यभोगा इत्यर्थः, तिरस्कृताः अभिभूताः, विद्विषः शत्रवः यैः जितशत्रव इत्यर्थः, प्रणतानि शिरांसि येषां तथाभूतानां राज्ञां सामन्तानां, चूडासहस्रैः कृतम् अर्चनं पूजनं येषां तथाभूताः, शतम् आत्मजाः पुत्राः, सङ्ख्ये युद्धे, अभिमुखं यथा तथा अरीन् शत्रून् घ्नन्तः नाशयन्तः सन्तः, हताः निधनं प्राप्ता इत्यर्थः, अतः तातः अम्बया मात्रा, सहितः, सगरेण ऊढां धुरं भारं, वहतु गृह्णातु। पुरा सूर्य्यवंशीयः सगरो नाम भूपतिः कपिलामर्षदग्धषष्टिसहस्रपुत्रोऽपि दीर्घकालं राज्यमकरोदिति कथाऽत्रानुसन्धेया। हरिणी वृत्तम्।

(२) विपर्य्यये वैपरीत्ये, पुत्रनाशात् क्षत्रियकार्य्येषु औदासीन्ये सतीत्यर्थः, अस्य अधिपतेः राज्ञः, तातस्येत्यर्थः, क्षात्रधर्मः क्षत्रियधर्मप्रतिपालनम्, उल्लङ्घितः अतिक्रान्तः, अकृत इत्यर्थः।

---

(क) सञ्जय! किमेतत् हाहाकारमिश्रं तूर्य्यरसितं श्रूयते?।

यावदपरमपि किञ्चिदत्याहितं न श्रावयति, तावदेवाज्ञापय मां सङ्ग्रामावतरणाय।

गान्धा। जाद! मुहुत्तअं दाव मं मंदभाइणीं समस्सासेहि। (क)

धृत। वत्स! यद्यपि भवान् समराय कृतनिश्चयः, तथाऽपि रहः-परप्रतीघातोपायः (१) चिन्त्यताम्।

दुर्यो। (२) प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रहः

किं वा तेन कृतेन तैरिह कृतं यन्न प्रकाश्यं रणे?।

गान्धा। जाद! एआइ तुमं, को दे सहाअत्तणं करिस्सदि?। (ख)

दुर्यो।

एकोऽहं भवतीसुतक्षयकरो मातः! किमन्योऽरयः?
शाम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी॥

---

(१) रहःपरेति।—रहसि विजने, गूढमिति भावः, परेषां शत्रूणां, प्रतीघातोपायः वधोपायः।

(२) प्रत्यक्षमक्षिसमीपे हताः बान्धवाः येषां तादृशाः, परे शत्रवः, रहो गुप्ता, हन्तुं न योग्याः, प्रत्यक्षं कृतापकाराणां प्रत्यक्षमेवापकारः कर्तुं योग्यः अन्यथा अयशः स्यादिति भावः, इह जगति, रणे यत् कर्म, तैरपि परैरपि, प्रकाश्यं प्रशंसनीयं, न भवति तेन कर्मणा, कृतेन किं प्रयोजनम्? अपि तु किमपि नास्तीत्यर्थः। दैवं भाग्यमेव, शाम्यं शान्तिम्, अनुकूलताम्, एतु भजतां, भाग्यशान्त्यैव मेदिनी निष्पाण्डवा भवेत् "पौरुषं दैवसम्पत्त्या काले फलति पाण्डव। क्षयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहम्॥" इति सूचा सर्वथा कर्मणा दैवायत्तत्वस्य प्रतिपादनात् तदानुकूल्यमेव मार्गये, नान्यसहायापेक्षेति भावः। शार्दूलविक्रीडितं वृत्तम्।

---

(क) जात! मुहूर्त्तं तावत् मां मन्दभाग्यां समाश्वासय।

(ख) जात! एकाकी त्वं, कस्ते सहायत्वं (साहाय्यं) करिष्यति?।

[ नेपथ्ये कलकलानन्तरम् ]। भो भो योधाः! निवेदयन्तु भवन्तः कौरवेश्वराय, इदं महत् कदनं प्रवृत्तम्। अलमप्रियश्रवणपराङ्मुखतया, यतः कालानुरूपं प्रतिविधातव्यमिदानीम्। तथा हि—

(१) त्यक्तप्राजनरश्मिरङ्किततनुः पार्थाङ्कितैर्मार्गणैः
वाहैः स्यन्दनवर्त्मना परिचयादाकृष्यमाणः शनैः।
वार्त्तामङ्गपतेर्विलोचनजलैरावेदयन् पृच्छतां
शून्येनैव रथेन याति शिविरं शल्यः कुरून् कम्पयन्॥

दुर्यो। [ श्रुत्वा साशङ्कम् ]। सूत! केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितं, ज्ञायताम्। कः कोऽत्र भोः!।

[ प्रविश्य सम्भ्रान्तः सूतः ]। हा! हतोऽस्मि। [ इत्यात्मानमपातयत् ]।

दुर्यो। कथय कथय?।

सूत। आयुष्मन्! किमन्यत्?—

(२) स्वल्पेन यथा शल्येन मूर्च्छितः प्रविशता जनौघोऽयम्।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन॥

---

(१) त्यक्तो शोकवशात् प्राजनरश्मी अश्वादिचालनतोदनवल्गी येन तादृशः, "प्राजनं तोदनं तोत्रम्" इत्यमरप्रामाण्यः, पार्थाङ्कितैः पार्थनामाङ्कितैः, सङ्कुलयुद्धे इह कस्येमे शरा इति ज्ञापनाय योद्धृभिः शराः स्वस्वनामाङ्किताः क्रियन्ते इति युद्धमर्यादा, स्यन्दनवर्त्मना वाहैः परिचयात् तेन अचालिता अपि अश्वाः संस्कारवशात्, येन पथा गतास्तेनैव पथा प्रत्यागच्छन्तोऽश्वाना स्वभाव, विलोचनजलैः अश्रुजलैः, पृच्छतां कर्णस्य वार्त्तां संवादम्, आवेदयन् शून्येन रथिरहितेन, कर्णस्य रथेन शिबिरं सेनासन्निवेशस्थानं, "छाउनि" इति प्रसिद्धस्थानं, याति। शार्दूलविक्रीडितं वृत्तम्।

(२) स्वल्पेनापि प्रविशता शल्येन यथा जनौघः मूर्च्छितो भवति तथा मनोरथमिव शून्यं कर्णशून्यं, कर्णस्य रथमधिरूढेन शल्येन प्रविशता जनौघः, कुरुबलस्थलोकौघः मूर्च्छितः।

दुर्य्यो। हा वयस्य कर्ण! [ इति मोहमुपगतः ]।

गान्धा। जाद! समस्ससिहि समस्ससिहि। (क)

सञ्ज। समाश्वसिहि समाश्वसिहि महाराज!

धृत। भोः! कष्टं कष्टम्!!—

(१) भीष्मे द्रोणे च निहते य आसीदवलम्बनम्।
पुत्रस्य मे सुहृत् प्रेयान् राधेयः सोऽप्ययं हतः॥

वत्स! समाश्वसिहि समाश्वसिहि। भो हतविधे!—

(२) अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः
शोच्यां दशामुपगतः सह भार्य्ययाऽहम्।
अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्य्योधनेऽपि हि कृतो भवता निराशः॥

वत्स दुर्य्योधन! समाश्वासय तपस्विनीं मातरम्।

दुर्य्यो। [ लब्धसंज्ञः ]।

(३) अयि कर्ण! कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम्।
सततावियुक्तमकृताप्रियं प्रियं
वृषसेनवत्सल! विहाय यासि माम्॥

---

(१) भीष्म इति।—भीष्मे द्रोणे च निहते सति मे मम, पुत्रस्य अतिप्रियः सुहृत् यः राधेयः राधासुतः कर्णः, अवलम्बनम् आश्रयः, आसीत् सोऽपि अयं कर्णः, हतः। पथ्यावक्त्रं वृत्तम्।

(२) अन्ध इति।—अनुभूतं शतपुत्राणां विपत्तिदुःखं मरणशोकः येन तादृशः, अन्धः अहं भार्य्यया सह शोच्यां दशाम् अवस्थाम्, उपगतः प्राप्तः, अशेषितः निःशेषतां गतः, सुहृदां गुरूणां बन्धूनाञ्च वर्गः यस्य तादृशेऽपि अस्मिन् दुर्य्योधने भवता त्वया, निराशः आशारहितः, कृतः। वसन्ततिलकं वृत्तम्।

(३) सततमवियुक्तमेकत्र स्थितत्वात् विरहाभावः, एकत्र स्थितस्याप्रियकरणे

---

(क) जात! समाश्वसिहि समाश्वसिहि।

[ इति पुनर्मोहमुपागतः ]।

[ सर्वे समाश्वासयन्ति ]।

दुर्य्यो। [ समाश्वस्य ]।—

मम प्राणाधिके तस्मिन्नङ्गानामीश्वरे हते।
उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात! का कथा?॥

अपि च—(१) शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासनं तमधुना न च बन्धुवर्गम्।
येनातिदुःश्रवमसाधु कृतन्तु कर्णे
कर्त्तास्मि तस्य निधनं समरे कुलस्य॥

गान्धा। जाद! सिढ़िलेहि दाव क्खणमेत्तं बाप्फमोक्खं। (क)

धृत। वत्स! क्षणमात्रं परिमार्जयाश्रूणि।

दुर्य्यो। (२) मामुद्दिश्य त्यजन् प्राणान् केनचिन्न निवारितः।
तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्य्यते?॥

---

त्यजता आत्मनोऽपि नासीत्याह, अकृताप्रियम्, एवम्भूतमित्रपरित्यागे कारणं विवक्षुः सम्बोधयति, वृषसेनवत्सल इति, "न च पुत्रसमः स्नेहः" इत्युक्तेः पुत्रवात्सल्यस्य सर्वतः प्रधानत्वात् तदनुरोधेनैव मां परित्यज्य वृषसेनं गत इति भावः। रुक्मवतीवृत्तम्।

(१) शोच्यमपि अवश्यशोचनार्हं, वत्समनुजं, न शोचामि तदपेक्षयापि, अतिस्नेहपात्रत्वात् अधिकशोच्ये कर्णे असाधु येन कृतं तस्य कुलस्य निधनं कर्त्तास्मि। वसन्ततिलकं वृत्तम्।

(२) मामिति।—माम् उद्दिश्य मदर्थमित्यर्थः, प्राणान् त्यजन्, कर्णः इति शेषः,

---

(क) जात! शिथिलय तावत् क्षणमात्रं बाष्पमोचनम्।

सूत ! केनेदमसम्भावितमस्मत्कुलान्तकरं कर्म कृतं स्यात् ?।

सूत। आयुष्मन् ! एवं किल जनः कथयति—

(१) भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य।
निहतः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य॥

दुर्यो। कर्णाननेन्दुस्मरणात् क्षुभितः शोकसागरः।
वाडवेनेव शिखिना पीयते क्रोधजेन मे॥

अम्ब ! तात ! प्रसीदतम्।

(२) ज्वलनः शोकजन्मा मामयं दहति दुःसहः।
समानायां विपत्तौ मे वरं संशयितुं रणे॥

धृत। [दुर्योधनं परिष्वज्य]

(३) भवति तनय ! सत्यं संशयः साहसेषु
द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम्।
अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड !
छलबहुलमरीणां सङ्गरं हा ! हतोऽस्मि॥

---

केनचित् जनेन, न निर्धारितः, तत्कृते तस्य कर्णस्य, कृते निमित्त, बाष्पेण अश्रु-भावं, व्रजतः दीनस्य बन्धुवियोगेन कातरस्य, किं कार्यं, वाच्यं ? पथ्यावक्त्रं वृत्तम्।

(१) भूमौ निमग्नं चक्रं यस्य, [illegible] तस्य रथचक्रं "भूमिग्रस्ते पतताम्" इति शापात्, [illegible], तेन भूमिनिमग्नचक्रः। सा च कथा कर्णपर्वणि ४९ अध्यायेऽनुसन्धेया। आर्या वृत्तम्।

(२) ज्वलन इति।—शोकात् जन्म यस्य तादृशः अत एव दुःसहः अयं ज्वलनः अग्निः, शोकाग्निरित्यर्थः, मां दहति, अतः समानायां तुल्यायां, विपत्तौ रणप्रवृत्तौ अपि शोकाग्निदाहो मे दुर्वार इति भावः, मे मम, रणे संशयितुं प्राणसंशयावस्थां गन्तुमित्यर्थः, वरं मनाक् प्रियम्। "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये" इत्यमरः। पथ्यावक्त्रं वृत्तम्।

(३) भीम भीमसेन, भीमं भीषणकर्माणम्, उत्प्रेक्ष्य उद्भाव्य एतत् हृदयं द्रवति [illegible]त्यर्थः, ते तव, चेष्टितं रणव्यापारः, अनिकृतिनिपुणं निकृतौ शाठ्ये, अनि-

गान्धा। जाद! तेण एव्व सुदसदकदंतेण विओदरेण समं समलं मग्गसि ?। (क)

दुर्य्यो। अम्ब ! तिष्ठतु तावत् वृकोदरः।

(१) पापेन येन हृदयस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनामलेन्दुः।
पुत्रस्तवाम्ब ! तव तात ! नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु ॥

सूत ! अलमिदानीं कालातिपातेन, सज्जं मे रथमुपहर। त्वच्चेद्विभेषि पाण्डवेभ्यः, तिष्ठ, गदामात्रसहाय एव समरभुवम् अवतरामि। अलमन्यथा सम्भावितेन, अयमहमागत एव। [इति निष्क्रान्तः]।

धृत। वत्स दुर्य्योधन! यदि स्थिर एवास्मान् दग्धुमयं

पुत्रमञ्चलानुबन्धीत्यर्थः, अरीणाम् मङ्गरं समरं, बहुच्छलं व्यसनमस्य द्रोणस्य केशग्रहणात् छलबहुलम्, इत्येव पराभवाग्रमया हतोऽस्मि बहुच्छलपाण्डवकर्तृक-भवन्नाशस्थासंसनेनाहमपि नष्ट इत्यर्थः, "जयो रन्ध्रप्रहारिणाम्" इत्युक्तेरेषां छल-प्रहारित्वेन जयावश्यम्भावात्; भवतश्च तन्नास्तीति विशेषणेनाह, मानशौण्ड! हे मानप्रधान! छलयुद्धे लोकेऽपयशः स्यादिति तद्भीरुणा मानवता त्वया तत् न क्रियते इति समुदितार्थः। मालिनी वृत्तम्।

(१) हृदयस्य मनोरथः अत्यन्ताभिलषणीयरूपः, प्रेमास्पदत्वात्, सर्वाङ्गेषु चन्दनरसरूपः, आप्यायनकारित्वात्, नयनस्य इन्दुस्वरूपः तृप्तिसाधनत्वात्, हे अम्ब! हे तात! तव पुत्रः पुत्रतुल्यः, वात्सल्यास्पदत्वात्, हे तात! तव नयैकशिष्यः नये नीतौ, एकशिष्यः प्रधानशिष्यः, एतादृशः कर्णो येन पापेन हतः निहतः, तस्मिन् शराः पतन्तु तेनैव सह योत्स्ये इत्यर्थः। वसन्ततिलकं वृत्तम्।

(क) जात! तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गयसे?।

ते व्यवसायः, तत् सन्निहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम्।

दुर्य्यो। नन्वभिषिक्त एव।

गान्धा। कदरो उण सो, जहिं एदं हदासं ओलंबिस्सं ?। (क)

शल्य। किं वा शल्यः ? उत वा अश्वत्थामा ?।

दुर्य्यो। (१) कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा।

अनिवारितसम्पातैरयमात्माऽश्रुवारिभिः॥

[ नेपथ्ये कलकलं कृत्वा ]। भो भोः कौरवबलप्रधानयोधाः! अलमस्मानवलोक्य भयादितस्ततो गन्तुम्; कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठति इति ?। [ सर्वे ससम्भ्रमम् आकर्णयन्ति ]।

[ प्रविश्य सम्भ्रान्तः सूतः ]। आयुष्मन्!—

प्राप्तावेकरथारूढ़ौ पृच्छन्तौ त्वामितस्ततः।

सर्वे। कस्य कस्य ?।

सूत। स कर्णारिः स च क्रूरो वृककर्मा (२) वृकोदरः॥

गान्धा। [ सभयम् ]। जाद! किं एत्थ संपदं प्पडिपज्जिदव्वं ?। (ख)

दुर्य्यो। ननु सन्निहितैवेयं गदा।

(१) अभिषिक्त इति पूर्वोक्तानुकर्षेण आत्माऽभिषिक्त इत्यर्थः। इह उद्वेगाख्यं नाटकाङ्गं, "नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः" इति दर्पणोक्तेः।

(२) वृकस्य व्याघ्रविशेषस्य, कर्मेव कर्म यस्य क्रूरकर्मेत्यर्थः।

(क) कतरः पुनः सः, यस्येमां हताशामवलम्बिष्ये ?।

(ख) जात! किमत्र प्रतिपत्तव्यम् ?।

गान्धा। हा! हदह्मि अहं मंदभाइणी। (क)

दुर्य्यो। अलमिदानीं कार्पण्येन। सञ्जय! सञ्जय! रथम् आरोप्य पितरौ शिविरं प्रवेशय, प्राप्तोऽस्मच्छोकापनोद-प्रणयी जनः।

धृत। वत्स! क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे।

दुर्य्यो। तात! किमनेनोपालम्भेन? तद्गम्यताम्।

[ धृतराष्ट्रो गान्धारी च किञ्चिद्गत्वा तिष्ठतः ]।

[ ततः प्रविशतो रथारूढौ भीमार्जुनौ ]।

भीम। भो भोः सुयोधनानुजीविनः! किमिति सस-म्भ्रममयथातथं सञ्चरन्ति भवन्तः? अलमावयोः शङ्कया।

(१) कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनमरुत् पाण्डवा यस्य दासाः।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्य्योधनोऽसौ? कथयत न रुषा द्रष्टुमभ्यागतौ स्वः॥

धृत। सञ्जय! दारुणः खलु उपक्षेपः (२) पापस्य।

सञ्ज। तात! कर्म्मणा कृतानिःशेषविप्रियाः सम्प्रति वाचा व्यवस्यन्ति (३)।

---

(१) द्यूतमेव छलानि तेषां कर्त्ता, जतुमयं जतुप्रचुरं, प्राचुर्यार्थे मयट्. शरणं गृहं, "शरणं गृहरक्षित्रोः" इत्यमरः, तस्योद्दीपनः प्रदीपनद्वारा दाहकः, कृष्णायाः द्रौपद्याः, केशस्य उत्तरीयस्य च व्यपनयनेऽपहारणे, मरुदिव वायुरिव, पटुरिति दर्पणधृतपाठः, पाण्डवाः यस्य दासाः द्यूतजयेन दासत्वेन सम्पादिताः। अत्र छलास्य सम्यक्, "[illegible]" इति दर्पणोक्तेः। स्रग्धरा वृत्तम्।

(२) उपक्षेपः भर्त्सनम्।

(३) व्यवस्यन्ति कीर्त्तयन्ति।

---

(क) हा! हताऽस्म्यहं मन्दभाग्या।

दुर्य्यो। सूत! ब्रूहि गत्वोभयोः, अयं तिष्ठतीति।

सूत। यथाऽऽज्ञापयति देवः। [तावुपसृत्य]। ननु भो वृकोदरार्जुनौ! एष महाराजस्तातेन अम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठति।

अर्ज्जु। आर्य्य! प्रसीद, न युक्तं पुत्रशोकोपपीड़ितौ पितरौ पुनरस्मद्दर्शनेनोद्वेजयितुं, तन्नच्छावः।

भीम। मूढ़! अनुल्लङ्घनीयः सदाचारः, न युक्तमनभिवाद्य गुरून् गन्तुम्। [उपसृत्य]। सञ्जय! पित्रोर्नमस्कृतिं श्रावय; अथवा तिष्ठ, स्वयमेव श्रावयावः। [इति रथादवतरतः]।

भीम। विश्राव्य स्वकर्म नाम च वन्दनीया गुरवः।

अर्ज्जु। [उपगम्य]। तात! अम्ब!—

(१) सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वा मध्यमः पाण्डवोऽयम्॥

भीम। (२) [* चूर्णिताशेष] कौरव्यः क्षीवो दुःशासनासृजा।
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाऽञ्चति॥

(१) सकलेति।—ते तव, सुतैः पुत्रैः, यत्र कर्णे, सकलानां रिपूणां शत्रूणां, जयाशा बद्धा निहिता, यस्य कर्णस्य, गर्वेण लोकः जगत्, तृणमिव परिभूतः तिरस्कृतः, तव पुत्रैरिति शेषः, रणशिरसि सङ्ग्राममुखे, तस्य राधासुतस्य कर्णस्य, निहन्ता अयं मध्यमः पाण्डवः अर्जुनः, पितरौ वां युवां, प्रणमति। मालिनी वृत्तं, "ननमयययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात्।

(२) चूर्णिताः अशेषाः कौरव्याः येन, दुःशासनासृजा तद्वक्षःस्थलरुधिरपानेन, क्षीवो मत्तः, भङ्क्ता भाविभञ्जनकारी, भविष्यदर्थे तृन्। इह व्यवसाय-

* [निहताशेष-] इत्यसम्मतपाठः।

धृत। दुरात्मन्! वृकोदर! न खल्विदं भवतैव केवलं सपत्नानामपकृतं, यावत् क्षत्रं तावत् समरविजयिनो जिता हताश्च वीराः, तत् किमेवं विकत्थनाभिरस्मानुद्वेजयसि ?।

भीम। तात! अलमलं मन्युना।—

(१) कृष्णा केशेषु कृष्टा तव सदसि वधूः पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृतशलभकुलावज्ञया येन दग्धाः।
एतस्मात् श्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पात्
पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात! साक्षी त्वमेव॥

दुर्य्यो। अरे रे मरुत्तनय! किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे ?। अपि च—

(२) कृष्टा केशेषु भार्य्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी।
अस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्राः ?
बाह्वोर्वीर्य्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ?॥

---

नामकं नाटकाङ्गं, "व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः" इति दर्पणोक्तेः। इह निरुक्तिरलङ्कारः, "पूर्वसिद्धार्थकथा निरुक्तिरिति कीर्त्तितम्" इति दर्पणोक्तेः। पथ्यावक्त्रं वृत्तम्।

(१) ये पापकारिणः ये च पापद्रष्टारोऽनुमन्तारो वा ते सर्वे एव नृपाः, येन स्वकृतापराधेनैव हेतुना, क्रोधवह्नौ कृष्णाक्रोधाग्नौ, कृतं युद्धं, यत् शलभकुलं तदवज्ञयैव तत्तुल्यानादरेणैव, अनायासेनैवेत्यर्थः, दग्धाः, एतस्मात् कारणात्, श्रावये न तु दर्पादिप्रकाशनाय, ततः हे तात! त्वमतिगुरुणि पुत्रपौत्रादिकृते कर्मणि साक्षी उदासीनः, मध्यस्थः, न तु तत्कर्मणि कर्त्तेत्यर्थः। स्रग्धरा वृत्तम्।

(२) तव तव च भीमार्जुनयोरुभयोः सम्बोध्यत्वात्, तस्य राज्ञः युधिष्ठिरस्य, तयोः नकुलसहदेवयोर्वा, इत्याक्षेपे अनादरे वा, भूपतीनां नृपाणाञ्च, प्रत्यक्षं द्यूतदासी द्यूतेन जितत्वात् दासीव, अपमानचेष्टाचरणयोग्यत्वात् केशेषु कृष्टा, अस्मिन् वैरानुबन्धे विद्वेषजनके कर्मणि, तैः तद्द्रष्टृभिर्नृपैः, किमपकृतम्? अपराद्धम्? मदाज्ञयैव

आः दुरात्मन्! एष न भवसि। [इति सक्रोधमुत्थाय हन्तु-मिच्छति]।

धृत। [धृत्वोपवेशयति]।

भीम। [क्रोधं नाटयति]।

अर्जु। आर्य्य! किमत्र क्रोधेन?—

(१) अप्रियाणि करोत्येष वाचा शक्तो न कर्म्मणा।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा? ॥

भीम। अरे रे भरतकुलकलङ्क!—

(२) अत्रैव किं न विशसेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन्!।
विघ्नं गुरुर्न कुरुते यदि मद्गदाग्र-
निर्भिद्यमानरणितास्थिनि ते शरीरे ॥

अन्यच्च, मूढ़!—

(३) शोकं स्त्रीवन्नयनसलिलं यत् परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि।

---

क्षतत्वात्, मामेव जित्वा गर्वयुक्तो भव, नार्व्वागित्यर्थः। इह सम्फेटनामकं नाटकाङ्गं, "सम्फेटो रोषभाषणम्" इति दर्पणोक्तेः। दर्पणकृता तु अरे रे मरुत्तनयेत्यादिवाक्य-मादावुद्धृत्येद पद्यमुदाहृतं, तेन गद्यपद्यसमुदायः सम्फेटः। स्रग्धरा वृत्तम्।

(१) यथा विकाररोगवतः प्रलापाः, एव शतभ्रातृवधव्यसनविकारवतः, तेनास्य कार्य्यासामर्थ्यं ध्वनितम्। इह छादनं नाटकाङ्गं, "तदाहुश्छादनं पुनः। कार्य्यार्थ-मपमानादेः सहनं खलु यद्भवेत्" इति दर्पणोक्तेः।

(२) विशसेयं नाशयेयम्। मद्गदाग्रेण निर्भिद्यमानानि अत एव रणितानि शब्दायमानानि, अस्थीनि यत्र तादृशे, शरीरे, तथा करणे यदि गुरुस्तातः, विघ्नं न कुर्य्यादित्यर्थः। अस्थिशब्दस्य मुख्यगौणपरत्वेऽपि अनङ्, तेन पक्षेऽनोऽल्लोपात् रूपसिद्धिः। रणितास्थीनीति पाठस्तु प्रामादिकः, अनङादेशस्य नित्यत्वात्। वसन्ततिलकं वृत्तम्।

(३) युग्मकुसुं कुमलिनीव, सुखच्छेद्यत्वात्, तव कुमारे हस्तिसदृशे, भीमसेने

आसीदेतत् तव कुनृपतेः कारणा जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥

दुर्य्यो। दुरात्मन्! भरतकुलाधम! द्यूतदास! पाण्डव-पशो! नाहं भवानिव विकत्थनाप्रगल्भः। किन्तु—

(१) द्रक्ष्यन्ति न चिरात् सुप्तं पाण्डवास्त्वां रणाजिरे।
मद्गदाभिन्नवक्षोऽस्थि-वेणिकाभीमभूषणम् ॥

भीम। [ विहस्य ]। यद्येवं नाश्रद्धेयो (२) भवान्, तथाऽपि प्रत्यासन्नमेव कथयामि।—

(३) पीनाभ्यां मद्भुजाभ्यां भ्रमितगुरुगदाघातसञ्चूर्णितोरोः
क्रूरस्याधाय पादं तव शिरसि नृणां पश्यतां श्वः प्रभाते।
त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेनानखाग्रं
स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥

[ नेपथ्ये ]। भो भो भीमसेनार्जुनौ! एष खलु निहताशेषारातिचक्राक्रान्तपरशुरामाभिरामयशाः (४) प्रताप-

क्रुद्धे सति यत् क्लीबत् चतुर्जलं त्याजितोऽसि, न पुनः प्रतिकर्तुं समर्थ इति भावः, यश्च भ्रातृवक्षोविदारणे साक्षीकृतोऽसि, जीवितस्य तवैतत्कारणा तीव्रवेदना, "कारणा तीव्रवेदना" इत्यमरः। मन्दाक्रान्ता वृत्तम्।

(१) मद्गदया भिन्नानि यानि वक्षोऽस्थीनि तेषां वेणिका प्रवाहः, रुधिरप्रवाहः, "वेणी तु केशवेशे स्यात् प्रवाहेऽपि निगद्यते" इति यादवः, ततः स्वार्थे कः, सैव भीमं भयानकं, भूषणं यस्य तथाभूतम्। पथ्यावक्त्रं वृत्तम्।

(२) नाश्रद्धेयो न अश्रद्धेयः, विश्वसनीयवचन इत्यर्थः।

(३) पश्यतां नृणां, पुर इति शेषः। स्त्यानेन पिण्डीभूतेन, घनेनेत्यर्थः, अक्तः लिप्तः सन्, त्वमेव मुख्यो यस्य तादृशं यत् भ्रातृचक्रं भ्रातृगणः, तस्योद्दलनेन गलन्ति यानि असृञ्जि रक्तानि, तानि चन्दनम् इव तेन भीमं भयानकं, भूषणं श्वः परदिने, स्वयमनुभविताऽस्मि, तथा च त्वां श्वो हनिष्यामीति भावः। स्रग्धरा वृत्तम्।

(४) निहताशेषेत्यादिविशेषणेन परशुरामतुल्यत्वसूचनम्।

तापितदिङ्मण्डलस्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति।

[ उभौ ]। किमाज्ञापयत्यार्य्यः ?। [ पुनर्नेपथ्ये ]।—

(१) कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारान्
अश्रून्मिश्रं कथञ्चित् ददतु जलममी बान्धवा बान्धवेभ्यः।
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कैः
अस्तं भास्वान् प्रयातः सह रिपुभिरयं संक्रियन्तां बलानि॥

[ उभौ ]। यदाज्ञापयत्यार्य्य। [ इति निष्क्रान्तौ ]।

[ नेपथ्ये ]। अरे रे गाण्डीवाकर्षणबाहुशालिन्! अर्जुन! अर्जुन! क्वेदानीं गम्यते ?।

(२) कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवतः शूरशून्ये रणेऽस्मिन्।
स्पर्शं स्मृत्वोत्तमाङ्गे पितुरनवजितन्यस्तहेतेरुपेतः
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि॥

(१) आप्ताः बान्धवाः। देहभारान् देहसङ्घान्, वह्निसात् कार्त्स्न्येन वह्निदेयान्, कुर्वन्तु. कार्त्स्न्येन देयेऽर्थे सातिप्रत्ययः, तस्य करोतेर्व्यवधानेऽपि साधुत्वमिष्यते। अश्रून्मिश्रं रोदनजलमिश्रितं, जलं ददतु। हतनरगहने गहनता दुर्गमता प्राप्ते, रणशिरसीत्यनुषज्यते। रिपुभिर्दुर्योधनपक्षीयैः, सह भास्वान् अस्तं प्रयातः प्रयातुमारब्ध, तथा च राज्ञः शत्रवो यथाऽस्तं नाशं गताः एवं रविरस्तमदर्शनं, गन्तुमारब्ध इत्यर्थः, अतो बलानि संक्रियन्तां नानास्थानस्थानि रणनिवारणपूर्वकमेकीक्रियन्ताम्। इह शक्तिर्नाटकाङ्गं, "शक्तिः पुनर्भवेत् विरोधस्य प्रशमनम्" इति दर्पणोक्तेः। स्रग्धरा वृत्तम्।

(२) एतान्यहानि व्याप्य कर्णक्रोधेन धनुस्त्यक्तम्, इदानीं तस्य नाशेन पुनर्गृहीतमिति भावः, मया धनुषस्त्यागात् शूरशून्येऽस्मिन् वने इव रणे प्रौढं प्रगल्भमित्यर्थः, विक्रान्तं विक्रमः, भावे क्तः, अनवजिता केनाप्यपराभूता, न्यस्ता शोकेन परित्यक्ता, हेतिरस्त्रं येन तादृशस्य, पितुरुत्तमाङ्गे स्पर्शं स्मृत्वा उत्तमाङ्गस्पर्शरूपापकार-

धृत। [आकर्ण्य सहर्षम्]। वत्स दुर्य्योधन! द्रोणपरिभवोद्दीपितक्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपमश्चायमश्वत्थामा प्राप्तः, तत् प्रत्युपगमनेन तावदयं सम्भाव्यतां वीरः।

गान्धा। जाद! पच्चुग्गच्छ एदं महाभाअम्। (क)

दुर्य्यो। तात! अम्ब! किमनेन अङ्गराजवधाशंसिना वृथायौवनबलशस्त्रभरेण?।

धृत। वत्स! न खल्वस्मिन् काले पराक्रमवतामेवंविधानां वचनमात्रेणैव विरागमुत्पादयितुमर्हसि।

[प्रविश्याश्वत्थामा]। विजयतां कौरवाधिपतिः।

दुर्य्यो। [उत्थाय]। गुरुपुत्र! इत आस्यताम्। [इत्युपवेशयति]।

अश्व। राजन्! दुर्य्योधन!—

(१) कर्णेन कर्णसुभगं बहु यत्तदुक्तं
यत् सङ्गरेषु विहितं विदितं त्वया तत्।
द्रौणिस्त्वधिज्यधनुरापतितोऽभ्यमित्रम्
एषोऽधुना त्यज नृपाप्रतिकारदुःखम्॥

---

समुत्थितः, पाण्डवानां कल्पाग्निरिव द्रुपदचमूनां चकारो नाशकः, द्रौणिः अपि अयम्, उपेतः प्राप्तः। स्रग्धरा वृत्तम्।

(१) कर्णेन कर्णसुभगं सुश्राव्यं, न तु सफलमित्यर्थः; तदेव स्पष्टयति, सङ्गरेषु युद्धेषु, यत् कृतं तत्त्वयैव विदितं, न कथनापेक्षेत्यर्थः, इदानीमभ्यमित्रममित्रं अमुमभिमुखीकृत्य, अधिज्यधनुर्ज्यामधिगतं धनुर्यस्य तादृशः सन्, आपतितः आगतः, अतः हे नृप! अप्रतिकारदुःखं प्रत्युतापकाराप्रतिकाररूपं दुःखं, त्यज। वसन्ततिलकं वृत्तम्।

---

(क) तात! प्रत्युद्गच्छ एतं महाभागम्।

दुर्य्यो। [साभ्यसूयम्]। आचार्य्यपुत्र !—

(१) अवसानेऽङ्गराजस्य योद्धव्यं भवता किल।
ममाप्यन्तं प्रतीक्षस्व कः कर्णः ? कः सुयोधनः ? ॥

अश्व। कथमद्यापि स एव कर्णपक्षपातः अस्मासु च परिभवः !! राजन् कौरवेश्वर ! एवं भवतु। [इति निष्क्रान्तः]।

धृत। वत्स ! क एष ते व्यामोहः ? अस्मिन् काले एवंविधस्य अश्वत्थाम्नः वाक्पारुष्येण अपरागम् (२) उत्पादयसि ?।

दुर्य्यो। किमस्याप्रियमनृतं मयोक्तम् ? किं वा नेदं क्रोधस्थानम् ? (३)। पश्य—

(४) अकलितमहिमानं क्षत्रियैरात्तचापैः
समरशिरसि युष्मद्भाग्यदोषाद्विपन्नम्।
परिवदति समक्षं मित्रमङ्गाधिराजं
मम खलु कथयास्मिन् को विशेषोऽर्जुने वा ? ॥

धृत। अथवा वत्स ! तवापि कोऽत्र दोषः, अवसानम् इदानीं भरतकुलस्य। गान्धारि ! किमिदानीं करोमि मन्दभाग्यः ?। [विचिन्त्य]। भवत्वेवं तावत्, सञ्जय ! मद्वचनात् ब्रूहि भारद्वाजमश्वत्थामानम्—

---

(१) अवसाने इति।—अङ्गराजस्य कर्णस्य, अवसाने भवता योद्धव्यं, किलेत्यलीकत्वोपहासत्वसूचकमव्ययम्; ममापि अन्तम् अवसानं, प्रतीक्षस्व, यतः कः कर्णः ? कश्च सुयोधनः ? कर्णसुयोधनावभिन्नावेवेति भावः। पथ्यावक्त्रं वृत्तम्।

(२) अपरागमसन्तोषम्।

(३) किं मया अनृतं मिथ्या, अथ वाप्रियमुक्तम् ? येनायं क्रुद्धः स्यात्, किन्तु सत्यवचनेनैवायं क्रुद्ध इति भावः, इदं कर्णाधिक्षेपरूपं वचनं, क्रोधस्थानं मम क्रोधावहं, न ? अपि तु क्रोधावहमेव।

(४) अन्वयः अकलितमहिमानम् अविज्ञातमाहात्म्यं, युष्मद्भाग्यदोषाद्विपन्नं विनष्टं, मम मित्रमङ्गाधिराजं मम समक्षं परिवदति निन्दति, अस्मिन् मित्रनिन्दके,

[१] स्मरति न भवान् पीतं स्तन्यं चिराय सहामुना
मम च मृदितं चौमं बाल्ये त्वदङ्गविवर्त्तनैः ।
अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च यत्
विकृतवचने माऽस्मिन् क्रोधश्चिरं क्रियतां त्वया ॥

सञ्ज । यदाज्ञापयति तातः । [ इत्युत्तिष्ठति ] ।

धृत । अपि चेदमन्यत्त्वया वक्तव्यम्—

(२) यश्चोचितस्तव पिता वितथेन शस्त्रं
यस्तादृशः परिभवः स तथाविधोऽभूत् ।
एतद्विचिन्त्य बलमात्मनि पौरुषञ्च
दुर्य्योधनोक्तमपहाय विधास्यसीति ॥

सञ्ज । यदाज्ञापयति तातः । [ इति निष्क्रान्तः ] ।

दुर्य्यो । सूत ! साङ्ग्रामिकं मे रथमुपकल्पय ।

सूत । यदाज्ञापयत्यायुष्मान् । [ इति निष्क्रान्तः ] ।

धृत । गान्धारि ! वृतो वयं मद्राधिपतेः शल्यस्य शिविरम्

---

अर्जुने वा तद्घातके, मम को विशेषः ? को भेदबोधः ? उभयोरपि मित्रद्वेष्टृत्वात्तुल्यत्वमित्यस्मिन् क्रोधध्यानत्वमुत्तममेवेति भाव. । मालिनी वृत्तम् ।

(१) अमुना सुयोधनेन सह, स्तन्यं गान्धारीस्तनभवं पयः, पीतं, बाल्ये त्वदङ्गविवर्त्तनैः तवाङ्गचालनैः, मम चौमं वास., यत् मर्दितम् एतच्च भवान् स्मरति ? अधुना अनुजगतवधस्फीतात् शोकात् कर्णे च अतिप्रणयात् विकृतवचनेऽस्मिन् दुर्य्योधने, क्रोधश्चिरं न क्रियताम् । यदिति पूर्वार्द्धेऽन्वितम् । हरिणी वृत्तम् ।

(२) तादृशः तादृशकाव्यन्तमहिमार्णवस्य पितुः तथाविधः धृष्टद्युम्नकृतमौलिस्पर्शादिरूपः, सः प्रथमावः, परिभवः तिरस्कारः, एतत् विचिन्त्य अनुस्मृत्य, बलपौरुषाभावेऽसमर्थस्य चेष्टा न भवतीत्याशङ्क्य तद्द्वयमपि तवास्तीत्याह, बलं देहजा शक्तिः, पौरुषम् उत्साहातिशयः; विधास्यसि प्रतिविधास्यसीत्यर्थः । वसन्ततिलकं वृत्तम् ।

एव गच्छाव: । (१) वत्स ! त्वमप्येवं कुरु । [ इति परिक्रम्य निष्क्रान्ताः सर्वे ] ।

इति पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः ।

[ ततः प्रविशति आसनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च ] ।

युधि । [ विचिन्त्य निःश्वस्य च ] ।

(२) तीर्णे भीष्ममहार्णवे कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशिष्टे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥

---

(१) सेनापत्ये तस्य वरणाय तव गमनमिति बोध्यम् ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वेणीसंहारनाटकव्याख्याने दुर्य्योधननामपञ्चमाङ्कव्याख्या ।

---

(२) भीष्म एव महार्णवस्तस्मिन् तीर्णे गतपारे सति, द्रोणः एवानलः तस्मिन् कथमपि केनापि रूपेण, निर्वृते स्वयमस्त्रत्यागेन शान्ते, न तु जयादिना अत एव कथमपीत्युक्तम्, आश्यां दंष्ट्रायां, विषं यस्य तादृशः भोगी देहो विद्यते यस्य विषयुक्तसर्प इत्यर्थः, "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः, कर्णः एवाशीविषभोगी महासर्पः तस्मिन्, प्रशमिते विनाशिते सति, जये स्वल्पावशिष्टे दुर्य्योधनमात्रजयापेक्षणात्, रभसा बलेन क्रियमाणं युद्धादिकं साहसं, प्रियं साहसं यस्य तेन भीमेन वाचा "अद्यैव दुर्योधनं हनिष्यामि अद्याहमन्ते जयं करिष्यामि" इत्येवंरूपप्रतिज्ञावाक्येन, वयं सर्वे जीवितसंशयं जीवनसंशयं, मरणसम्भावना वा, समारोपिताः गमिताः, तत्प्रतिज्ञाश्रवणेन अदर्शनं गतस्य दुर्य्योधन-

द्रौप। [सबाष्पम्]। महाराम! पंचालिए त्ति किं ण भणिदम्?। (१) (क)

युधि। कृष्णे! ननु मया (२)। [पुरुषमवलोक्य]। बुधक!

पुरु। देव! आज्ञापय।

युधि। उच्यतां सहदेवः, क्रुद्धस्य वृकोदरस्यापर्य्युषित-दारुणां प्रतिज्ञामुपलभ्य प्रनष्टस्य (३) मानिनः कौरवराजस्य पदवीमन्वेष्टुम् अतिनिपुणमतयस्तेषु तेषु स्थानान्तरेषु यथार्थाभिज्ञाः सुसचिवाश्च भक्तिमन्तः पटुपटहरवव्यक्त-घोषणाः (४) सुयोधनपदसञ्चारवेदिनः प्रतिश्रुतधनपूजाप्रत्युप-क्रियाश्चरन्तु समन्तात् समन्तपञ्चकम्। अपि च—

स्यादर्शने युद्धाभावेन भीममरणसम्भावनया वयमपि सर्वे तन्मार्गेण मरिष्याम इति भावः। इह विरोधनं नाटकाङ्ग, "कार्य्यात्ययोपगमनं विरोधनमिति स्मृतम्" इति दर्पणोक्ते.। महार्णवे इत्यत्र महोदधाविति दर्पणसम्मतः पाठः। शार्दूल-विक्रीडितं वृत्तम्।

(१) पाञ्चाल्या मया सर्वं संशयमारोपिता इति किं न भणितम्? भीमेन तदुक्त-प्रतिज्ञाया मत्केशाम्बराकर्षणजातकोपेनैव कृतात्, मया चापकटुभाषणात् ममैव तद्दोषभागित्वं न तु भीमस्येति द्रौपद्याशयः।

(२) प्रयोजकत्वेन द्रौपद्या आत्मनः कर्तृत्वे प्रतिपादिते ततोऽपि प्रयोजकतया राज्ञा आत्मनः एव सर्वानर्थहेतुभूतद्यूतकर्तृत्वेनात्मनः प्रयोजकत्वेन कर्तृत्वमुररी-क्रियते, ननु मयेति।

(३) अपर्य्युषिता अपरदिनमानिनी. "अद्यैव हनिष्यामि, अन्याहनने स्वयं मरि-ष्यामि" इत्येवरूपा. अत एव दारुणा अन्याहनने स्वमरणफलकत्वात्, प्रतिज्ञा तामुपलभ्य श्रुत्वा. प्रनष्टस्य अदर्शनं गतस्य, गुप्तस्येत्यर्थः।

(४) पटुना पटहरवेण ढक्काशब्देन, व्यक्तं यथा तथा घोषयन्ति इति घोषणाः,

(क) महाराज! पाञ्चाल्येति किं न भणितम्?।

(१) पङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु दाशाः
[ * कक्षेषु क्षुण्ण ] वीरुन्निचयपरिचया वल्लवाः सञ्चरन्तु।
व्याधा व्याघ्राटवीषु स्वपरपदविदो ये च रन्ध्रेष्वभिज्ञा
ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च चाराश्चरन्तु॥

पुरु। यदाज्ञापयति देवः।

युधि। एवं वक्तव्यः सहदेवः,—

(२) ज्ञेया रहः-शङ्कितमालपन्तः सुप्ता रुगार्त्ता इव वने विचेयाः।
त्रासो मृगाणां वयसां विरावो नृपाङ्कपादप्रतिमा च यत्र॥

नन्द्यादित्वात् ल्युः, सर्वत्र प्रविशार्थं ढक्कामुच्चैर्वादयन्तः। "स्यात् यशःपटहो ढक्का" इत्यमरः।

(१) ये चारा यत्र योग्यास्ते तत्र नियोज्या इत्युपदिशति। दाशाः कैवर्ताः, "कैवर्ते दाशधीवरौ" इत्यमरः, पङ्के पङ्किले जलादौ, सैकते सिकतामयप्रदेशे च, नियोज्याः, तेषां जलप्रायदेशेष्वेव दक्षत्वात्; वल्लवाः गोपाः, कक्षेषु गुल्मतृण-गुल्मस्थानेषु, गोचारणोपयोगितया तेषां तत्रैवाभिज्ञत्वात्, क्षुण्णे विदलिते, वीरुन्निचये लतासङ्घे, परिचयो येषां तथाभूताः, कुञ्जेष्विति पाठे—लतावेष्टित-स्थानेष्वित्यर्थः, आक्रान्ते स्वयमाचरणरूपेण परिहृते, वीरुन्निचये परिचयो येषामिति वाक्यार्थः, व्याधाः व्याघ्रप्रधानाटवीषु नियोज्य यान्तु, रन्ध्रेषु गर्त्तेषु; सिद्धाना व्यञ्जनं लक्षणमिव, व्यञ्जनं येषां ते सिद्धपुरुषचिह्नधारिणः, प्रतिमुनिनिलयं सर्व-मुनिस्थाने, चरन्तु, तद्रूपाणामेव तत्र प्रवेशौचित्यात्। स्रग्धरा वृत्तम्।

(२) नियुक्तचाराणामन्वेषणप्रकारमुपदिशति, ज्ञेया इति।—रहसि निर्जने, शङ्कितं सशङ्कं यथा स्यात्तथा, आलपन्तः जनाः अयं दुर्योधनो न वेति अनुसन्धेयाः, रुगार्त्ता रोगेण पीडिताः, सुप्ता जना अपि तथा तद्रूपाः, अनुसन्धेयाः; एवं विशेष-सूक्ष्माऽन्वेषणस्थानमाह, त्रास इत्यादि, नृपाणाम् 'चक्रादिचिह्नानि पद्मादीनि यत्र तादृशस्य, पादस्य प्रतिमाः प्रतिमूर्त्तयो यत्र तत्रान्वेष्टव्य इत्यर्थः। उपजाति वृत्तम्, इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिः, तदुक्तं छन्दोमञ्जर्यां, "स्यादिन्द्रवज्रा यदि

[ * कुञ्जेष्वाक्रान्त— ] क्वचित् पाठः।

पुरु। यथाऽऽज्ञापयति देवः। [ इति निष्क्रम्य पुनः प्रविश्य सहर्षम् ]। देव ! पाञ्चालकः प्राप्तः।

युधि। त्वरितं प्रवेशय।

पुरु। [ निष्क्रम्य पाञ्चालकेन सह प्रविश्य ]। एष देवः, उपसर्पतु पाञ्चालकः।

पाञ्चा। जयतु जयतु देवः। प्रियमावेदयामि महाराजाय देव्यै च।

युधि। भद्र पाञ्चालक ! कच्चिदासादिता तस्य दुरात्मनः कौरवाधमस्य पदवी ?।

पाञ्चा। देव ! न केवलं पदवी, सोऽपि दुरात्मा देवीकेशाम्बराकर्षणमहापातकप्रधानहेतुरुपलब्धः।

युधि। [ सहर्षं पाञ्चालकं परिष्वज्य ]। साधु भद्र ! प्रियम् आवेदितम्, अथ दर्शनगोचरं गतः ?।

पाञ्चा। देव! समरगोचरं पृच्छ।

द्रौप। [सभयम्]। कहं !! समरगोअरो वट्टइ मे णाहो ?। (क)

युधि। [ साशङ्कम् ]। सत्यम् !! समरगोचरो मे वत्सः ?।

पाञ्चा। सत्यं, किमन्यथा वक्ष्यते महाराजाय।

युधि। (१) त्रस्तं विनाऽपि विषयादुरुविक्रमस्य
चेतो विवेकपरिमन्थरतां प्रयाति।

यो जगौ गः" इति, "उपेन्द्रवज्रा प्रथमे लघौ सा" इति, "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति।

(१) विषयात् कारणात्, विनाऽपि त्रस्तं प्रकृत्या भीतं, मे चेतो विवेकपरिमन्थरतां भीमो जयी स्यात् न वेति निश्चयविषये मान्द्यं, प्रयाति, उरुविक्रमस्य महा-

(क) कथम् !! समरगोचरो वर्तते मे नाथः ?।

जानामि चोद्धतगदस्य वृकोदरस्य
सारं रणेषु [ * विजये ] परिशङ्कितश्च ॥

[ द्रौपदीमवलोक्य मुखादस्या बाष्पं नयति ]। अयि सुक्षत्रिये !—

(१) गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः
पुराऽभूदस्माकं नृपसदसि योऽयं परिभवः।
प्रिये ! प्रायस्तस्य द्वितयमपि पारं गमयतु
क्षयः प्राणानां वा कुरुपतिपशोस्तस्य निधनम् ॥

अथवा कृतं सन्देहेन—

(२) नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा।
बध्यते केशपाशस्ते स चास्याकर्षणे प्रभुः ॥

पाञ्चालक ! कथय कथय, कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे ? किमधुना प्रवृत्तम् ? इति।

द्रौप। भद्द ! कहेहि कहेहि ?। (क)

पराक्रमस्य, भीमस्य रणेषु सारं बलं, जानामि, तथाऽपि स्नेहवशादेव विजये परिशङ्कितः। भुजयोरिति पाठे—भुजयोः सारमित्यन्वयः। वसन्ततिलकं वृत्तम्।

(१) हे प्रिये। द्वितयमपि वक्ष्यमाणमुभयमेव, प्रायः बाहुल्येन, तस्य परिभवस्य, पारमन्तं, गमयतु, प्रार्थनायां लोट्, तत् द्वयमाह, प्राणानां क्षयः तस्य वा निधनमेतदुभयम्, अन्यतरं विना न तस्य परिभवस्य शान्तिरित्यर्थः। शिखरिणी वृत्तम्।

(२) ते तव, केशपाशः केशसमूहः, "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यमरः, अद्य तेन बध्यते संयम्यते, बन्ध बन्धने इत्यस्य रूपम्, अस्य केशपाशस्य, आकर्षणे प्रभुः प्रयोजकः सुयोधनश्च, बध्यते, बध हिंसायामित्यस्य रूपम्।

(क) भद्र ! कथय कथय।

* भुजयोः ] क्वचित् पाठः।

पाञ्चा। शृणोतु देवो देवी च ; अस्तीह (१) देवेन हते मद्राधिपतौ शल्ये, गान्धारराजशलभकुले सहदेवानलं प्रविष्टे, सेनापतिनिधननराक्रन्दविरलयोधोज्झितासु समरभूमिषु, रिपु-पराजयोद्धत-चलित-विचित्रपराक्रमासादित-विमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्मत्सेनासु, प्रनष्टेषु कृपकृतवर्माऽश्वत्थामसु, तथा दारुणां प्रतिज्ञामुपलभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः ।

युधि। ततस्ततः ?।

द्रौप। अग्गदो कहेहि ?। (क)

पाञ्चा। अवधत्तां देवो देवी च ; ततश्च भगवता वासुदेवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ समन्तात् समन्तपञ्चकं पर्य्यटितुमारब्धौ तमनासादितवन्तौ च। अनन्तरं देवमनुशोचति मातृवर्गे भृत्यवर्गे, दीर्घमुष्णञ्च निःश्वसति कुमारबीभत्सौ, जलधरसमयनिशासञ्चारितडित्प्रकरपिङ्गलैः कटाक्षैरादीपयति गदां वृकोदरे, यत्किञ्चनकारितामधिक्षिपति विधेर्भगवति नारायणे, कश्चित् संविदितः (२) कुमारस्य मारुतकृज्झितमांसभारः प्रत्यग्रविशसित-मृगलोहित-चरणनिवसनस्त्वरमाणोऽन्तिकमुपेत्य पुरुषः परुषश्वासग्रस्तार्द्ध-श्रुतवर्णानुमेयपदया वाचा कथितवान्, देव कुमार! अस्मिन् महतोऽस्य सरसस्तीरे द्वे पद्धती समवतीर्णपदप्रतिबिम्बे (३), तयोरेका जलोत्तीर्णा न द्वितीया, परत्र कुमारः प्रमाणमिति ।

(१) इह चास्मिन् विषये, इदं वक्ष्यमाणवाक्यं तदर्थो वाऽस्तीत्यर्थः ।

(२) संविदितशब्दात्: संविदितं विद्यतेऽस्येति अर्श आदित्वादच् ।

(३) समवतीर्णे बिम्बस्तं, पदप्रतिबिम्बे पदप्रतिकृतिर्ययोस्तादृशौ ।

(क) अग्रतः कथय ।

ततः ससम्भ्रमं प्रस्थिताः सर्वे वयं तमेव पुरस्कृत्य, गत्वा च सरस्तीरं परिज्ञाय सुयोधनपदलाञ्छितां पदवीमासाद्य भगवता वासुदेवेनोक्तं, वृकोदर! जानाति किल सुयोधनः सलिलस्तम्भनीं विद्यां, नूनं तेन त्वद्भयात् सरसीमेनामधिशयितेन भवितव्यम्। एतच्च वचनमुपश्रुत्य बलानुजस्य सकलदिक्प्रपूरितातिरिक्तम्, उद्भ्रान्तसकलसलिलचारिचक्रं, त्रासोद्धतनक्रम्, आलोडितं सरःसलिलं, भैरवञ्च गर्जित्वा कुमारवृकोदरेणाभिहितम्, अरे रे वृथाप्रख्यापितालीकपौरुषाभिमानिन्! पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन्! धार्त्तराष्ट्रापसद!—

(१) जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणित[ *सुराक्षीवं रिपुं भाषसे ]।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासात् नृपशो! विहाय समरं पङ्केऽधुना लीयसे?॥

अपि च, भो मानान्ध! कौरवाधम!—

(२) पाञ्चाल्याः क्रोधवह्निः स्फुटमुपशमितप्राय एष प्रसह्य
प्रोन्मुक्ताः केशपाशैर्हतपतिषु मया कौरवान्तःपुरेषु।

(१) इन्दोश्चन्द्रस्य, विमले कुले जन्म व्यपदिशसि, चन्द्रवंशे जातोऽहमित्येवं कथयसि, ननु सहायाभावात् कथं योत्स्य? इत्याशङ्क्याह, अद्यापि गदां धत्से महासहायस्यान्यसहायापेक्षा नेति भावः। अथवा भ्रात्रादिवधेन निर्वेदे गदात्याग एवोचितः, स च न कृत इत्यतोऽद्यापि युद्धश्रद्धाऽस्तीति गम्यते इति भावः, मां दुःशासनस्य यत् कोष्णमीषदुष्णं, प्रत्यग्रहतत्वात्, शोणितं तदेव सुरा, पाठान्तरे— मधु, तेन क्षीवं मत्तं, भाषसे, मन्यसे वा मत्ततयाऽवजानासे इत्यर्थः, नृपशो! हे नराधम! मत्त्रासात् मद्भीतितः, पङ्केऽधुना लीयसे?। इह द्युतिर्नाटकाङ्गं, "तर्जनोद्वेजने प्रोक्ता द्युतिः" इति दर्पणोक्तेः। शार्दूलविक्रीडितं वृत्तम्।

(२) मया प्रसह्य बलात्, हतपतिषु कौरवाणामन्तःपुरेषु तद्वासिवासाजने-

[ * मधुक्षीवं रिपुं मन्यसे ] क्वचित् पाठः।

भ्रातुर्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात् किं भीमसेने विहितमसमये यत्त्वयाऽस्तोऽभिमानः ? ॥

द्रौप। णाह! अवणीदो मे मसू जइ पुणोवि सुलहं दंसणं भविस्सदि। (क)

युधि। कृष्णे! नामङ्गलानि व्याहर्त्तुमर्हसि अस्मिन् काले। भद्र! ततस्ततः ?।

पाञ्चा। देव! ततश्चैवं भाषमाणेन वृकोदरेण वीर्य्यक्रोधोद्धत-भ्रमितभीषणगदापाणिना सहसैवोल्लङ्घिततीरम्, उत्सन्ननलिनम्, आविद्धमूर्च्छितग्राहम्, उद्भ्रान्तसमस्तशकुन्तम्, अतिभैरवं, वेगभ्रमितवारिसञ्चयम्,. आयतमपि सरः समन्तादवलोडितम्।

युधि। भद्र! तथाऽपि किं नोत्थितः ?।

पाञ्चा। देव! कथं नोत्थितः ?—

(१) त्यक्त्वोत्थितः सरभसं सरसः स मूलम्
उद्भ्रान्तकोपदहनोग्रविषस्फुलिङ्गः।
आयस्तभीमभुजमन्दरवेल्लनाभिः
क्षीराम्बुधेः सुमथितादिव कालकूटः ॥

च्छिन्नाः। प्रोन्मुक्ते मृतपतिकत्वात् निर्बन्धने, केशपाशे हेतुभिः पाञ्चाल्याः क्रोधवह्निः उपशमितप्रायः, भ्रातुरुरसः रुधिरं पीयमानं निरीक्ष्य क्रोधात् भीमसेने मयि, किं विहितम् ? न किमपीत्यर्थः, असमये मया सह युद्धकरणस्यैवाय समयः, न तु पलायनस्य, युद्धसमयेऽपि तदकृत्वा त्वया यत् यस्मात्, आत्ममानोऽहङ्कारः, अस्तः त्यक्तः, अतः न किमपि कर्तुं समर्थः इत्यर्थः। स्रग्धरा वृत्तम्।

(१) स राजा, सरसः सरोवरस्य, मूलं समीपमाश्रित्य, सरभसं सवेगं, त्यक्त्वा आयस्तौ आस्फालितौ, भीमभुजावेव मन्दरस्तेन वेल्लनाभिश्चालनाभिः, सुमथितात् आलोडितात्, क्षीराम्बुधेरिव सरसः कालकूट इव उत्थितः। वसन्ततिलकं वृत्तम्।

(क) नाथ! अपनीतो मे मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति।

युधि। साधु सुक्षत्रिय ! साधु ! ।

द्रौप। पडिवस्सो समस्तो ण वा ? । (क)

पाञ्चा। उत्थाय चास्मात् सलिलाशयात् करयुगलोत्तम्भित-तोरणीकृतभीमगदः कथयति स्म, मारुते ! किम् ॥ भवतो भयेन प्रलीनं दुर्य्योधनं कथयसि ? मूढ ! अनभिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुमध्यवसितवानस्मि पातालम्, एवं चोक्तं वासुदेवार्किरीटिभ्यां द्वावप्यन्तः-सलिलं निषिद्धसमर-[ * समारम्भौ ] भीमसुयोधनौ। आसीनश्च कौरवराजः क्षिति-तले गदां निक्षिप्य निहतकुरुशतगजवाजिनरशतकलेवरसम्मर्द-सम्पतितरथध्वजच्छत्रशकुनम्, उत्सन्नसुयोधनबलम्, अस्मद्घोरमुक्त-सिंहनादसंवलितसमरतूर्य्यम्, अबान्धवम्, अमित्रबान्धवं कौरवसङ्ग्रामस्थानम् अवलोक्य आयतमुष्णञ्च निश्वसितवान्। ततश्च वृकोदरेणाभिहितम्, अयि भोः कौरवराज ! कृतं बन्धु-जनमन्युना, मैवं विषादं कृथाः पर्य्याप्ताः पाण्डवाः, सोऽहं-मसहाय इति। किञ्च—

(१) पञ्चाना मन्यसेऽस्माकं यं सुयोधं सुयोधन ! ।

[ † दंशित ] स्यात्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः ॥

इत्यच्च श्रुत्वा किञ्चिदश्रुपातान्विता दृष्टिं कुमारयोर्निक्षिप्य उक्तवान्।

(२) कर्णदुःशासनवधात् तुल्याविव युवा मम।

अप्रियोऽपि प्रियो योद्धं त्वमेकः प्रियसाहसः ॥

(१) दंशितस्य धृतवर्म्मणः, आत्तशस्त्रस्य गृहीतायुधस्य, ते तव, सङ्ग्रामोऽस्तु। पथ्यावक्त्रं वृत्तम्।

(२) कर्णेति। हे वृकोदर। अत्यथ्याहार्य्यं, कर्णदुःशासनवधात् कर्णस्य

(क) प्रतिपन्नं समरं न वा ? ।

[ * दृढमुत्साहितौ ] क्वचित् पाठः। [ † वर्म्मितस्य ] क्वचित् पाठः।

इत्युत्थाय परस्परक्रोधाक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ चित्रगदापरिघभासुरभुजभरौ मण्डलैर्विहर्त्तुमारब्धौ भीमदुर्य्योधनौ। अहञ्च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः, आह च देवो देवकीनन्दनः, अपर्य्युषितप्रतिज्ञे च मारुतौ प्रनष्टे (१) कौरवराजे महानासीन्नो विषादः, सम्प्रति पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान्, अभ्युदयोचिताश्च प्रवर्त्त्यन्तामनवरतमङ्गलसमारम्भाः, कृतं सन्देहेन—

(२) पूर्य्यन्तां सलिलेन रत्नकलसा राज्याभिषेकाय ते
कृष्णाऽत्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम्।
रामे घोरकुठारभासुरकरे क्षत्रद्रुमच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ?॥

द्रौप। [सवाष्पम्]। जं देवो त्तिहुअणणाहो आसङ्गेदि तं कहं अण्णहा हुविस्सदि ?। (क)

दुःशासनस्य च वधात् युवां मम तुल्यावेव समानावेव, रिपू इति शेषः, एकः द्वितीयः, प्रियसाहसः अतिसाहसीत्यर्थः, त्वम् अप्रियोऽपि द्वेष्योऽपि, योद्धुं मे मम, प्रियः।

(१) अपर्य्युषितप्रतिज्ञे अपर्य्युषिता असिद्धेति भावः, प्रतिज्ञा यस्य तादृशे, मारुतौ मरुत्तनये, भीमे इत्यर्थः। प्रनष्टे पलायिते, अदर्शनं गते इत्यर्थः।

(२) पूर्य्यन्तामिति।—रत्नकलसाः ते तव, राज्याभिषेकाय सलिलेन पूर्य्यन्ताम्, कृष्णा द्रौपदी, अत्यन्तचिरोज्झिते अतिचिरत्यक्ते, कबरीबन्धे केशसंयमने, क्षणम् उत्सवम्, करोतु, घोरेण भीषणेन, कुठारेण भासुरः समुज्ज्वलः, करः बाहुः यस्य तादृशे क्षत्रा एव द्रुमाः वृक्षाः, तेषां छेदिनि रामे भार्गवे, क्रोधान्धे अतिक्रुद्धे, वृकोदरे च आजौ युद्धे, परिपतति सति संशयः सन्देहः, जय प्रतीति शेषः, कुतः ? नास्ति सन्देह इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(क) यत् देवस्त्रिभुवननाथ आशङ्कयति तत् कथमन्यथा भविष्यति ?।

पाञ्चा। न केवलमियमाशीः, असुरनिसूदनस्यादेशोऽपि।

युधि। को हि नाम भगवतां सन्दिष्टं विकल्पयति? (१) कः कोऽत्र भो!?।

कञ्चु। [प्रविश्य]। आज्ञापयतु देवः।

युधि। देवस्य देवकीनन्दनस्य बहुमानात् वत्सस्य विजयमङ्गलाशंसया प्रवर्त्त्यन्तां तदुचिताः समारम्भाः।

कञ्चु। [सोत्साहं परिक्रम्य]। भो भोः संविधातृणां (२) पुरःसराः! यथाप्रधानमन्तर्वेश्मनि दौवारिकाश्च! एष खलु भुजबलपरिक्षेपोत्तीर्णकौरवपरिभवसागरस्य, (३) निर्व्यूढदुर्द्धरप्रतिज्ञाभारस्य, सुयोधनानुजशतोद्धननप्रभञ्जनस्य, *। बलिनः, प्राभञ्जनेः, (४) दुःशासनोरःस्थलविदलननरसिंहस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्त्तुमाज्ञापयति देवो युधिष्ठिरः।

[आकाशे]। किं ब्रूथ? सर्वतोऽधिकतरमपि प्रवृत्तं, किं वा नालोकयसीति? साधु पुत्रकाः! साधु, अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम्।

युधि। आर्य्य जयन्धर!।

कञ्चु। आज्ञापयतु देवः।

---

(१) सन्दिष्टं वाचिकम्। विकल्पयति सन्देग्धि।

(२) संविधातृणां कर्मचारिणाम्।

(३) भुजेति।—भुजबलस्य बाहुबलस्य, परिक्षेपेण साम्यर्थेनेत्यर्थः, उत्तीर्णः कौरवाणां परिभव एव सागरो येन तथाभूतस्य।

(४) प्राभञ्जनेः प्रभञ्जनस्य वायोरपत्यं पुमान् प्राभञ्जनिः तस्य भीमस्येत्यर्थः।

---

[*दुर्य्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य वृकोदरस्य]

क्वचिदधिकः पाठः।

युधि। गच्छ, प्रियख्यापकं पाञ्चालकं पारितोषिकेण परितोषय।

कञ्चु। यदाज्ञापयति देवः। [इति पाञ्चालकेन सह निष्क्रान्तः]।

द्रौप। महाराअ! किं णिमित्तं उण णाहभोमसेणेण सो दुराआरो भणिदो, पंचाणं वि अह्माणं जेण दे रोअदि तेण सह संगामो होदु त्ति? कहं णाम एदाणं मद्दीसुदाणं एक्कदरेण पत्थिदो तेण संगामो भवे तदो अच्चाहिदं भवे। (क)

युधि। कृष्णे! एवं मन्यते जरासन्धघाती, हतसकलबन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेषासु एकादशसु अक्षौहिणीषु अबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्त्तराष्ट्रः परित्यजेदायुधं, तपोवनं वा व्रजेत्, सन्धिं वा पितृमुखेन याचेत, एवं सति सुदूरमतिक्रान्तः प्रतिज्ञाभारो भवेत् सकलारिपुजयस्येति। समरं प्रतिपत्तुं पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षमः सुयोधनः। शङ्के चाहं गदायुद्धं वृकोदरस्यैवानेन। अयि सुक्षत्रिये! पश्य—

(१) क्रोधोद्गूर्णगदस्य नास्ति सदृशः सत्यं रणे मारुतः
कौरव्ये कृतहस्तता पुनरियं देवे यथा सीरिणि।
स्वस्त्यस्त्वुद्धतधार्त्तराष्ट्रनलिनीनागाय वत्साय मे
शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम्॥

(१) क्रोधेन उद्गूर्णा उद्धृता, गदा येन, गुरौ उद्यमने इत्यस्मात् कर्मणि क्तः। कृतहस्तता शीघ्रहस्तता, शिक्षाकौशलमित्यर्थः। उद्धतः उत्कटः, धार्त्तराष्ट्र एव

(क) महाराज! किं निमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणित, पञ्चानामप्यस्माकं येन ते रोचते तेन सह सङ्ग्रामो भवत्विति? कथं नामैतयोः माद्रीसुतयोरेकतरेण प्रार्थितस्तेन सङ्ग्रामो भवेत् ततोऽत्याहितं भवेत्।

[ नेपथ्ये ]। भो: ! तृषितोऽस्मि, सम्भावयतु कश्चित् सलिल-च्छायासम्प्रदानेन माम्।

युधि। [ आकर्ण्य ]। क: कोऽत्र भो: ! ?।

कञ्चुकी। [ प्रविश्य ]। आज्ञापयतु देव:।

युधि। ज्ञायतां किमेतत्।

कञ्चु। यदाज्ञापयति देव:। [ इति निष्क्रम्य पुन: प्रविश्य ]। देव ! मुख्यमान् अतिथिरुपस्थित:।

युधि। शीघ्रं प्रवेशय।

कञ्चु। यदाज्ञापयति देव:। [ इति निष्क्रान्त: ]।

[ तत: प्रविशति मुनिवेशधारी चार्वाको नाम राक्षस: ]।

राक्ष। [ आत्मगतम् ]। एषोऽस्मि सुयोधनस्य मित्रं पाण्डवान् वञ्चयितुं भ्रमामि। [ प्रकाशम् ]। तृषितोऽस्मि, सम्भावयतु मां कश्चित् जलच्छायाप्रदानेन। [ इति राज्ञ: समीपमुपसर्पति ]।

[ सर्वे उत्तिष्ठन्ति ]।

युधि। मुने ! अभिवादये।

राक्ष। अकालोऽयं समुदाचारस्य, जलप्रदानेन सम्भावयतु माम्।

युधि। मुने ! उपविश्यतामासने।

राक्ष। [ उपविश्य ]। ननु भवताऽपि क्रियतामासनपरि-ग्रह:।

युधि। क: कोऽत्र भो: ! ?।

कञ्चुकी। [ प्रविश्य गृहीतभृङ्गार: उपसृत्य ]। महाराज ! शिशिरसुरभिसलिलसम्पूर्णोऽयं भृङ्गार:, पानभाजनं चेदम्।

---

नलिनीपत्रसङ्घात:, तत्र नागाय नागवत् ध्वंसनाय, अलि कुसुमम् पश्य।
शार्दूलविक्रीडितं वृत्तम्।

युधि। मुने ! निवर्त्त्यतामुदन्याप्रतीकारः (१)।

राक्ष। [ पादौ प्रक्षाल्य उपस्पृशन् ]। भोः भोः ! क्षत्रिय-स्त्वमिति मन्ये ?।

युधि। सम्यक् वेत्ति भवान्, क्षत्रिय एवास्मि।

राक्ष। प्रतिदिनसुलभस्वजनविनाशनेषु सङ्ग्रामेषु युष्मत्तो नादेयं सलिलादिकम। भवतु, छाययैवानया सरस्वतीशिशिर-तरङ्गस्पृशा मरुताऽनेन विगतक्लमो भविष्यामि।

द्रौप। बुद्धिमदिए ! वीएहि महेसिं तालविंतेण। (क)

[ चेटी तथा करोति ]।

राक्ष। भवति ! अनुचितोऽयमस्मासु समुदाचारः।

युधि। मुने ! कथं पुनरेवं भवान् परिश्रान्तः ?।

राक्ष। मुनिजनसुलभेन कौतूहलेन तत्रभवतां महास्त्रवि-द्यानां द्वन्द्वयुद्धमवलोकयितुं पर्य्यटामि समन्तपञ्चकम्, अद्य तु बलवत्तया शरदातपस्य अपर्य्यासम् (२) एवावलोक्य गदा-युद्धमर्जुनसुयोधनयोरागतोऽस्मि।

कञ्चु। मुने ! न खल्वेवं, भीमसुयोधनयोरिति कथय।

राक्ष। आः ! अविदितवृत्तान्त एव कथं मामाक्षिपसि ?।

युधि। महर्षे ! कथय ?।

राक्ष। क्षणमात्रं विश्रम्य सर्वं कथयामि भवतः, न पुन-रस्य वृद्धस्य।

युधि। कथय, किमर्जुनसुयोधनयोरिति ?।

---

(१) उदन्याप्रतीकारः पिपासाशान्तिः।

(२) अपर्य्यासम असम्पूर्णम्।

---

(क) बुद्धिमतिके ! वीजय महर्षिं तालवृन्तेन ( व्यजनेन )।

राक्ष । पूर्वमेव कथितं मया, प्रवृत्तं गदायुद्धमर्जुनसुयोधन योरिति ।

युधि । न भीमसुयोधनयोरिति ? ।

राक्ष । वृत्तं तत् ।

[ युधिष्ठिरो द्रौपदी च मोहमुपगतौ ] ।

कञ्चुकी । [ सलिलमासिच्य ] । समाश्वसितु देवो देवी च ।

चेटी । समस्ससिदु समस्ससिदु देवो । (क)

[ उभौ संज्ञा लभेते ] ।

युधि । किं कथयसि मुने ! वृत्तं भीमसुयोधनयोर्गदा-युद्धमिति ? ।

द्रौप । भअवं ! कहेहि, किं वुत्तं त्ति ? । (ख)

राक्ष । कञ्चुकिन् ! कौ पुनरेतौ ? ।

कञ्चु । ब्रह्मन् ! एष देवो युधिष्ठिरः, एषा पञ्चालराज-तनया ।

राक्ष । आः ! दारुणमुपक्रान्तं मया नृशंसेन ।

द्रौप । हा णाह ! भीम ! (ग) [ इति मोहमुपगता ] ।

कञ्चु । किं नाम कथितम् ? ।

चेटी । समस्ससिदु समस्ससिदु देवी । (घ)

युधि । [ सास्रम् ] । ब्रह्मन् !—

(१) पदे सन्दिग्ध एवास्मिन् दुःखमास्ते युधिष्ठिरः ।
वत्सस्य निश्चिते तत्त्वे प्राणत्यागादहं सुखी ॥

(१) सन्दिग्धे संशयिते, अस्मिन् पदे विषये, भीमो जीवति न वेत्येवंरूपे, युधिष्ठिरः

(क) समाश्वसितु समाश्वसितु देवी ।

(ख) भगवन् ! कथय, किं वृत्तमिति ? ।

(ग) हा नाथ ! भीम ! ।

(घ) समाश्वसितु समाश्वसितु देवी ।

राच। [ सानन्दमात्मगतम् ]। अयं मे यत्नः। [ प्रकाशम् ]। यद्येवमवश्यकथनीयं सङ्क्षेपेण कथयामि, न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम्।

युधि। [ अश्रूणि मुञ्चन् ]।

(१) सर्वथा कथय ब्रह्मन्! सङ्क्षेपाद्विस्तरेण वा ?।
वत्सस्य किमपि श्रोतुमेव दत्तः क्षणो मया॥

राच। श्रूयताम्—

(२) तस्मिन् कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे

द्रौप। [ सहसोत्थाय ]। तदो तदो ?! (क)

राच। [ स्वगतम् ]। कथं पुनरनयोर्लब्धसञ्ज्ञतामपनयामि ?। [ प्रकाशम् ]।

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः सङ्गरः।
आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृतिं दुःशासनारौ गतः॥

युधि। हा वत्स वृकोदर! [ इति मोहमुपगतः ]।

---

दुःखमास्ते, वत्सस्य भीमस्य, तस्मिं जीवनाभावे, निश्चिते सति, अहं प्राणत्यागात् सुखी तन्मरणदुःखात् मरणं श्रेयस्तरं मन्यमानः भविष्यामीत्यर्थः।

(१) सर्वथेति।—हे ब्रह्मन्! सर्वथा सर्वैः प्रकारैः, सङ्क्षेपात् विस्तरेण वा कथय? मया वत्सस्य भीमस्य, किमपि दुर्घटनमिति भावः, श्रोतुम् एव क्षणः समयः, दत्तः। पथ्यावक्त्रं वृत्तम्।

(२) सीरी बलरामः, तीर्थयात्राप्रक्रमात तत्प्रसङ्गेन कुरुक्षेत्रे तद्दिवसे आगत इति महापर्वस्थिता कथाऽत्रानुसन्धेया। हलिना बलरामेण, प्रियशिष्यतामालम्ब्य कौरवे संज्ञा सङ्केतविशेषः, शक्तिरिति पाठे—शक्तिः कौशलरूपा, आहिता, यां शक्तिम्, आसाद्य कुरूत्तमः कुरुश्रेष्ठः, दुःशासनारौ भीमे, प्रतिकृतिं प्रतीकारं, गतः भ्रातृमरणजन्यदुःखप्रतिकाररूपं तद्धननं कृतवानित्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

---

(क) ततस्ततः ?।

द्रौप । हा णाह भीमसेण ! हा मह परिभवपडिआरपरिच्चत्तजीविअ ! जडासुरबअहिडिंबकिम्मीरकीचअजरासंधणिसूदण ! सोअंधिआहरणचाडुआर ! देहि मे पडिवअणं । (क) [ इति मोहमुपगता ] ।

कञ्चु । [ सास्रम् ] । हा कुमार भीमसेन ! धार्त्तराष्ट्रकुलकमलिनीप्रालेयवर्ष ! । महाराज । समाश्वसिहि समाश्वसिहि । भद्रे ! समाश्वासय तत्रभवतीम् । महर्षे ! त्वमपि आश्वासय महाराजम् ।

राक्ष । [ स्वगतम् ] । आश्वासयामि प्राणास्त्याजयितुम् । [ प्रकाशम् ] । अयि भोः भीमाग्रज ! क्षणमेकमाधीयताम् आश्वासः, कथाशेषोऽप्यस्ति ।

युधि । [ समाश्वस्य ] । महर्षे । किमस्ति कथाशेषः ? ।

राक्ष । ततश्च हते तस्मिन् सुक्षत्रिय वीरसुलभा गतिमुपगते समग्रमङ्गलितं भ्रातृवधशोकजं बाष्पमुत्सृज्य भ्रातृवधशोकात् अपहाय गाण्डीव प्रत्यग्रक्षतजच्छटाचर्चितां तामिव गदां भ्रातृहस्तात् यत्नादाकृष्य निवार्य्यमाणः सन्धित्सुना वासुदेवेन, आगच्छागच्छेति सोपहासं भ्रमितगदाभङ्कारमूर्च्छितगम्भीरवचनध्वनिना आहूयमानः कौरवराजेन तृतीयोऽनुजस्ते किरीटी योद्धुमारब्धः, तथा कृतिनस्तस्य गदाघातान्निधनमुत्प्रेक्षमाणेन कामपालेन (१) अर्जुनपक्षपाती देवकीसूनुः प्रयत्नात् स्वरथमारोप्य द्वारकां नीतः ।

(१) कामपालेन हलधरेण ।

(क) हा नाथ भीमसेन ! हा मम परिभवप्रतीकारपरित्यक्तजीवित ! जटासुरबकहिडिम्बकिर्मीरकीचकजरासन्धनिसूदन ! सौगन्धिकाहरणचाटुकार ! देहि मे प्रतिवचनम् ।

युधि। साधु भो अर्जुन! तदैव प्रतिपन्ना वृकोदरपदवी गाण्डीवं परित्यजता, अहं पुनः केनोपायेन प्राणापगमन-महोत्सवमुत्सहिष्ये ?।

द्रौप। हा णाह! भादुवच्छल! ण जुत्तं भादरं असिक्खिदं गदाए सत्तुणो मुहं गच्छंतं उवेक्खिदुं। (क) [ इति मोह-मुपागता ]।

राच। ततश्चाहम्—"

युधि। भवतु मुने! किमतः परं श्रुतेन ?। हा तात! भीमसेन! जतुगृहसमुद्रतरणयानपोत! हा किर्म्मीरहिडिम्बासुर-जरासन्धजयमल्ल! हा कीचकसुयोधनानुजकमलिनीकुञ्जर! हा द्यूतपणप्रणयिन्! मम शरीरस्थितिपरिखेदशङ्कासूदन! हा मदाज्ञासम्पादक! हा कौरववनदावानल!—

(१) निर्लज्जस्य दुरोदरव्यसनिनो वत्स! त्वया सीदता
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता।
किं नामापकृतं मया तदधिकं त्वय्यद्य निर्वत्सलम् ?
त्यक्त्वाऽनाथमबान्धवं सपदि मां येनासि दूरं गतः ?॥

द्रौप। [ उत्थाय ]। महाराअ! किं एदं वट्टइ ?। (ख)

---

(१) निर्लज्जस्येति।—हे वत्स! समदद्विपायुतबलेन दशसहस्रमत्तहस्तिबल-धारिणा, त्वया सीदता क्लिश्यता सता, दुरोदरव्यसनिनः द्यूतरतस्य, अत एव निर्लज्जस्य मे मम, भक्त्या दासता किङ्करता, अङ्गीकृता स्वीकृता, तदधिकं तस्मादधिकं, मया अद्य किं नाम अपकृतम् ? अनिष्टं कृतम् ? येन अनाथम् अनाश्रयम, अबान्धवं निर्वत्सलं वात्सल्यरहितं, मां सपदि झटिति, त्यक्त्वा दूरं गतोऽसि ? निधनं प्राप्तोऽसि ?। शार्दूलविक्रीडितं वृत्तम्।

---

(क) हा नाथ! भ्रातृवत्सल! न युक्तं भ्रातरम् अशिक्षितं गदायां शत्रोर्मुखं गच्छन्तम् उपेक्षितुम्।

(ख) महाराज! किमेतद्वर्त्तते ?।

युधि । कृष्णे ! किमन्यत् ?—

(१) स कीचकनिसूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदसन्धिभेदाशनिः ।
गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥

द्रौप । [ आकाशे दत्तदृष्टिः ] । णाह ! भीमसेण ! तुए किल मे केसा संजमदव्वा, ण जुत्तं वीरस्स क्खत्तिअस्स प्पडिण्णादं सिढिलेदुं, ता प्पडिवालेहि मं जाव उवसप्पामि । (क) [ इति पुनर्मोहमुपागता ] ।

युधि । [ आकाशे दत्तदृष्टिः ] । अम्ब पृथे ! श्रुतोऽयं तव पुत्रस्य समुदाचारः ? मामकमनाथं विलपन्तमुत्सृज्य क्वापि गतः । तात ! जरासन्धशत्रो ! किं नाम वैपरीत्यमेतावता कालेन अल्पायुषि [ * ] समालोकितं जनेन ? । अथवा मयैव बहूपलब्धम्—

(२) दत्त्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे ।

(१) स इति ।—कीचकनिसूदनः कीचकहन्ता, बकहिडिम्बकिर्मीरहा बकादि-राक्षसत्रयघाती, मदान्धो यो मगधाधिपः जरासन्धः, स एव द्विरदः हस्ती, तस्य सन्धिभेदे सयोगविदारणे, अशनिः वज्रः, गदा एव परिघः तेन शोभिना भुजयुगेन बाहुद्वयेन, अन्वितः तव प्रियः प्रीतिवर्द्धनः, मम अनुजः कनिष्ठः, अर्जुनस्य गुरुः ज्येष्ठः, भीमः अस्तं गतः किल निधनं गत एव । पृथ्वी वृत्तम् ।

(२) करदीकृताः अखिलाः नृपाः यस्याः तथाविधां मेदिनीं मे मह्यं, दत्त्वा

(क) नाथ । भीमसेन । त्वया किल मे केशाः संयमयितव्याः, न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुं, तत् प्रतिपालय मां यावदुपसर्पामि ।

[ त्वयि ] अधिकः पाठः ।

स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत् सूदतां
तान्येतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥

मुने ! किं कथयसि ? तस्मिन् कौरवभीमयोः [ इति पठति ] ।

राक्ष । एवमेतत् ।

युधि । धिक् !! मम भाग्यानि । [ आकाशमवलोकयन् ] ।
भगवन् ! कामपाल ! कृष्णाग्रज !— [ * ]

(१) ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यानुजे मे ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम् ? ॥

समर्थं, यत् लज्जसे लज्जितवानसि, भूतसामीप्ये लट्; एवमुत्तरत्र; यत् मया पञ्चालतोऽपि बलवत्त्वेन कल्पितोऽपि, यत् कुप्यसि क्रुद्धवान्, किन्तु प्रीयसे प्रीतोऽसि, यच्च सूदतां पाचकत्वं, प्राप्तोऽसि, तानि स्मृतानि, एतानि पूर्वोक्तानि कर्माणि, सहसा विनश्वरस्य तव चिह्नानि लिङ्गानि, दृष्टानि, भविष्यतो विनयादिगुणाधिक्यं भवतीति लोकप्रसिद्धिः, तथा च एतानि कार्याणि तवाचिरमरणानुमापकानीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(१) ज्ञातिः सपिण्डः, पितृष्वस्रेयतया समानदेहावयवत्वेन भीमादेस्तथाविधत्वं, तस्मिन् या प्रीतिरनुरागः सा, न कृता नादृता, त्वयेति शेषः, क्षात्रधर्मोऽपि न गणितः, युद्धद्रष्टृभिरपक्षपातिभिर्भवितव्यमिति हि क्षात्रधर्मः, तवानुजस्य वासुदेवस्य, ममानुजेऽर्जुने, चिरं बहुकालं व्याप्य, सख्यं मैत्री, यत् रूढं तदपि न गणितं, तदादरं हि तद्ग्रहणमनुचितमिति भावः, भवतः शिष्ययोः गदायुद्धेऽन्तेवासिनोः भीमसुयोधनयोः, तुल्य एव स्नेहबन्धः काममित्यवधारणे, स्नेहतुल्यत्वेऽपि एकस्य साहाय्यकरणमनुचितमिति भावः । इह द्रवो नाटकाङ्गं, "द्रवो गुरुव्यतिक्रान्तिः शोकावेगादसम्भवा" इति दर्पणोक्तेः । मन्दाक्रान्ता वृत्तम् ।

* [ सुभद्राभ्रातः ! ] इत्यधिकः पाठः ।

[द्रौपदीमुपगम्य]। अयि पाञ्चालि ! उत्तिष्ठ उत्तिष्ठ, समानदुःखावेव आवां भवावः, मूर्च्छया किं मामेवमभिसन्धत्से? (१)।

द्रौप। [लब्धसंज्ञा]। बंधेदु णाहो दुज्जोहणरुहिलाद्देण हत्थेण दुःसासणमोइदं मे केसहत्थं। हंजे बुद्धिमदिए! तव पच्चक्खं एव्व णाहेण पडिस्सादं। [कञ्चुकिनमुपेत्य]। संदिट्टं दाव मे देवकीणंदणेण, केसरअणा आरंभीअदु त्ति, ता उवणेहि मे फुल्लदामाइं, विरएहि दाव कवरीं, करेहि भअवदो पुरिसोत्तमस्स वअणं, णहि अलीअं मंतेदि सो; अहवा किं मए अदिमंतत्ताए भणिदं? अदूरगदं अज्जउत्तं अणुगमिस्सं। [युधिष्ठिरमुपगम्य]। महाराअ! आदीवअ मे चिदां, तुमंवि क्खत्तधम्मं अणुवट्टंतो एव्व णाहस्स जीविदहरस्स अहिमुहो होहि। (क)

युधि। युक्तमाह पाञ्चाली। कञ्चुकिन्! क्रियतामियं तपस्विनी चितासंविभागेन सद्यवेदना, ममापि सज्यं धनुरुपनय, अलमथवा धनुषा—

(२) तस्यैव देहरुधिरोच्चितपाटलाङ्गीम्
आदाय संयति गदामपविद्धचापः।

(१) अभिसन्धत्से ? व्याकुलयसि ?।

(२) तस्यैवेति।—अपविद्धचापः त्यक्तधन्वा, अहं तस्यैव भीमस्यैव, देहरुधिरेण

(क) बध्नातु नाथो दुर्य्योधनरुधिरार्द्रेण हस्तेन दुःशासनमोचितं मे केशहस्तम्। हञ्जे बुद्धिमतिके! तव प्रत्यक्षमेव नाथेन प्रतिज्ञातम्। सन्दिष्टं तावन्मे देवकीनन्दनेन, केशरचना आरभ्यतामिति, तदुपनय मे फुल्लदामानि, विरचय तावत् कवरीं, कुरुष्व भगवतः पुरुषोत्तमस्य वचनं, न ह्यलीकं मन्त्रयते सः; अथवा किं मया अतिसन्नतया भणितम्? अदूरगतमार्य्यपुत्रमनुगमिष्यामि। महाराज! आदीपय मे चितां, त्वमपि क्षत्रधर्ममनुवर्त्तमान एव नाथस्य जीवितहरस्याभिमुखो भव।

भ्रातृप्रियेण कृतमद्य यदर्जुनेन
श्रेयो ममापि हि तदेव कृतं जयेन ॥

राच। राजन्! रिपुजयविमुखं ते यदि चेतः, तदा यत्र तत्र वा प्राणत्यागं कुरु, वृथा तत्र गमनम्।

कञ्चु। [ सरोषम् ]। धिक्!! मुनिजनासदृशं राक्षसस्य सदृशं भवता व्याहृतम्।

राच। [ स्वगतम् ]। किं ज्ञातोऽहमनेन ?। [ प्रकाशम् ]। भोः कञ्चुकिन्! एतत् ब्रवीमि, तयोर्गदाया खलु युद्धं प्रवृत्तम् अर्जुनदुर्य्योधनयोः, जानामि तयोर्गदाया भुजसारं, दुःखितः तस्य राजर्षेरपरमनिष्टश्रवणं परिहरन् एवं ब्रवीमि।

युधि। [ वाष्पं विसृजन् ]। साधु महर्षे! साधु, सुस्निग्धम् अभिहितम्।

कञ्चु। महाराज! किं नाम शोकान्धतया देवकल्पेनापि देवेन त्वया प्राकृतेनेव त्यज्यते क्षत्रधर्मः ?।

युधि। आर्य्य जयन्धर!—

(१) अक्ष्यामि नो परिघपीवरबाहुदण्डौ
वित्तेशशक्रवरुणाधिकवीर्य्यवन्तौ।
भीमार्जुनौ क्षितितले प्रविचेष्टमानौ
द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम् ॥

---

रुधिराक्तानि सिक्तानि, अत एव पाटलानि रक्तानि, अङ्गानि यस्यास्तादृशीं, गदाम् आदाय संयति युद्धे, अवतरन् निधनं गच्छामीति अध्याहार्य्य व्याख्येयम्। भ्रातृप्रियेण अर्जुनेन यत् कृतं गदायुद्धेन यत् प्राणास्त्यक्ता इति भावः, ममापि तदेव श्रेयः शुभं, जयेन विजयलाभेन, कृतम् अलम्, जयं नाभिलषामीति भावः। वसन्ततिलकं वृत्तम्।

(१) अक्ष्यामीति।—परिघवत् पीवरौ स्थूलौ, बाहुदण्डौ ययोः तथाभूतौ, वित्तेशः कुवेरः, शक्रः इन्द्रः, वरुणः जलाधिदेवः, तेभ्यः अधिकं वीर्य्यं विद्यते ययोः

अयि पाञ्चालराजतनये ! मद्दुर्नयप्राप्तशोच्यदशे ! यथा सन्दीप्यते पावकस्तथा सहितावेव बन्धुजनं सम्भावयाव: ।

द्रौप । अज्ज । करेहि दारुसंचअं । कहं ! ! ण कोवि महाराअस्स वअणं करेदि ! ! हा णाह ! अज्ज तुए विणा महाराओ परिअणेण वि परिहवीअदि । (क)

राक्ष । सदृशमिदं भरतकुलवधूनां पत्यनुमरणम् ।

युधि । महर्षे ! न कश्चित् शृणोति तावदावयोर्वचनं, तत् इन्धनप्रदानेन प्रसादः क्रियताम् ।

राक्ष । मुनिजनविरुद्धमिदम् । [स्वगतम्] । पूर्णा मे मनोरथाः, यावदनुपलक्षितः समीपेऽहमिन्धनमादीपयामि । [प्रकाशम्] । राजन् ! न शक्नुमो वयमवस्थातुम् । [इति निष्क्रान्तः] ।

युधि । कृष्णे ! न कश्चिदस्मद्वचनं करोति, भवतु, स्वयमेव अहं दारुसञ्चयं कृत्वा चितामादीपयामि ।

द्रौप । तुवरदु तुवरदु महाराओ । [नेपथ्ये कलकलः] ।

द्रौप । [सभयमाकर्ण्य] । महाराअ ! कस्स वि एसो तेओबलदप्पिदस्स णिग्घोसो सुणीअदि, अवरं वि अप्पिअं सुणिदुं अत्थि णिब्बंधो ? तदो विलंबीअदि ? । (ख)

---

ताड्यौ, भीमार्जुनौ क्षितितले प्रविचेष्टमानौ लुठन्तौ, तयोश्च भीमार्जुनयोः, निधनेन कृतार्थं सिद्धमनोरथ, रिपुं मम सुयोधनस्य, द्रष्टुं नो शक्ष्यामि । वसन्ततिलकं वृत्तम् ।

---

(क) आर्य्य ! कुरु दारुसञ्चयम् । कथम् !! न कोऽपि महाराजस्य वचनं करोति !! । हा नाथ ! अद्य त्वया विना महाराजः परिजनेनापि परिभूयते ।

(ख) महाराज ! कस्यापि एष तेजोबलदर्पितस्य निर्घोषः श्रूयते, अपरमप्यप्रियं श्रोतुमस्ति निर्बन्धः ? ततो विलम्ब्यते ? ।

युधि। न खलु विलम्ब्यते, उत्तिष्ठ। [ इति सर्वे परिक्रामन्ति ]।

युधि। अयि पाञ्चालि! अम्बायाः सपत्नीजनस्य च किञ्चित् सन्दिश्य निवार्य्यतां परिजनः।

द्रौप। महाराअ! अंबाए एव्वं संदिसिस्सं, जो सो बअहिडिंबकिम्मीरजरासंधजअमल्लो वि ते मज्झमपुत्तो मम हदासाए पक्खवादेण परलोअं गदो त्ति। (क)

युधि। भद्रे! बुद्धिमतिके! उच्यतामस्मद्वचनादम्बा—

(१) येनासि तत्र जतुवेश्मनि दीप्यमाने
उत्तारिता सह सुतैर्भुजयोर्बलेन।
तस्य प्रियस्य बलिनस्तनयस्य पापं
कोऽन्यस्तवाम्ब! कथयेत् कथमीदृशस्य?॥

आर्य्य जयन्धर! त्वमपि सहदेवसकाशं गच्छ, वक्तव्यश्च तत्रभवान् पाण्डुकुलबृहस्पतिर्वैमात्रेयः, सकलकुरुकुलकमलाकरबाड़वानलो युधिष्ठिरः परलोकमभिप्रस्थितः प्रियम् अनुजमनुकूलं सततमाशंसनीयम् असम्मूढं व्यसनेऽभ्युदये च धृतिमन्तं भवन्तमचिरमालिङ्ग्य शिरसि चाघ्रायेदं प्रार्थयते—(२)

(१) येनेति।—तत्र जतुवेश्मनि जतुगृहे, दीप्यमाने ज्वलति, येन भीमेन, भुजयोर्बलेन बाहुबलेन, सुतैः अस्माभिः सह, उत्तारिताऽसि, अम्ब! हे मातः! अन्यः कः तस्य प्रियस्य बलिनः बलवतः, ईदृशस्य एवम्प्रभावस्य, तनयस्य पुत्रस्य, पापम् अनिष्टघटनं, तव, सकाशे इति शेषः, कथं कथयेत्? न कथमपि कथयेदित्यर्थः। वसन्ततिलकं वृत्तम्।

(२) तत्रेत्यादि एवमीदृशं शरीरमिति यदास्तं वचनं वक्तव्य इत्यर्थः। पाण्डु-

(क) महाराज! अम्बायै एवं सन्देक्ष्यामि, यः स बकहिडिम्बकिर्मीरजरासन्धजयमल्लोऽपि ते मध्यमपुत्रो मम हताशायाः पक्षपातेन परलोकं गत इति।

(१) मम हि वयसा दूरेण त्वं श्रुतेन समो भवान्
कृतसहजया बुद्ध्या ज्येष्ठो मनीषितया गुरुः ।
शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥

अपि च, बाल्ये संवर्द्धितस्य नित्यमभिमानिनोऽस्मसदृश-हृदयसारस्यापि नकुलस्य ममाज्ञया वचने स्थातव्यं, नानुगन्तव्याऽस्मत्पदवी त्वया हि वत्स !—

(२) विस्मृत्यास्मान् श्रुतिविशदया स्वाग्रजौ चात्मबुद्ध्या
क्षीणे पाण्डावुदकपृषतानश्रुगर्भान् प्रदातुम् ।
दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥

---

कुले बृहस्पतिरूपः, प्रशस्तबुद्धिमत्त्वात्, अत एव प्रशस्तबुद्धिशालितया प्रशंसनीयत्वात् सद्भवानिति विशेषणम् । कुरुकुलमेव कमलानां जलानाम्, आकरः समुद्रः, तत्र वाडवानलरूपः, अनिवार्य्यत्वात् ; दावानल इति पाठे—कमलानामाकरः समूहः, तत्र दावानलरूपः, अनायासेन दाहादिनैव नाशकत्वात् । परलोकमभिप्रस्थितः प्रस्थातुमारब्धः, उक्तविशेषणविशिष्टं भवन्तमालिङ्ग्य प्रणयेन शिरसि आघ्राय चेदं प्रार्थयते ।

(१) प्रार्थनीयमाह, मम वयसा दूरेण हीन इत्यर्थः, भवान् श्रुतेन ज्ञानेन, मम समस्तुल्यः, कृतसहजया बुद्ध्या सहजबुद्ध्या, भ्रातृबुद्ध्येत्यर्थः, अहं ज्येष्ठस्त्वं पुनः मनीषितया बुद्धिमत्त्वेन, गुरुर्ममाधिकः मान्यश्च, अतः कारणात्, त्वयि गुरुत्वादित्यर्थः, शिरसि अञ्जलिं बद्धा अहमभ्यर्थये पितुर्वारिदो भव अस्माकं सर्वेषां मरणात् अस्मत्तर्पणकारकविरहेण तर्पणाभावो मा भूदिति, तथा च त्वया अस्मत्पदवी नानुगन्तव्येत्यर्थः । हरिणी वृत्तम् ।

(२) श्रुतिविशदया शास्त्रज्ञानेन निर्मलया, आत्मबुद्ध्या स्वधिया, विवेकधियेत्यर्थः, अस्मान् माम्, अस्मद एकत्वेऽपि विभाषया बहुत्वानुशासनात्, स्वाग्रजौ भीमार्जुनौ च, विस्मृत्य शोकविमोचनेनाननुचिन्त्येत्यर्थः, पाण्डौ क्षीणे अस्मत्प्रायेण तद्वंशक्षयात् क्षीणतां प्राप्ते सतीत्यर्थः, अश्रुगर्भान् अश्रुसंवलितान्,

गच्छ जयन्धर ! अस्मच्छरीरस्पृष्टिकया शापितेन भवता अकालहीनमिदमवश्यमावेदनीयम् । (१)

द्रौप । हला बुद्धिमदिए ! भणाहि मह वअणेण पिअ-सहीं सुभद्दां, वच्छाए उत्तराए चउट्ठो मासो पडिवण्णस्स गब्भस्स, तुमं एव्व कुलपडिट्ठावअं सावहाणं रक्ख त्ति । कदावि इदो लोआदो गदस्स ससुरकुलस्स अह्माणं च सलिल-बिंदुदो भविस्सदि त्ति । (क)

युधि । [ सास्रम् ] । भोः ! कष्टम् !!—

(२) शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूलपर्यङ्कबन्धे ।
दग्धे दैवात् सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मिन्
आशाबन्धं कमपि कुरुते छाययाऽर्थी जनोऽयम् ॥

---

उदकपृषतान् जलबिन्दून्, प्रदातु दायादानां भवने यादवाना यदुवंश्यक्षत्रियाणां वा, कुले तत्समीपे इत्यर्थः, अत्यन्तनिर्वेदे कान्तारे दुर्गमवने वा, कृतवसतिना कृतावासेन, भवता शरीरं रक्षणीयं, न तु अस्माभिरिव त्याज्यमित्यर्थः । मन्दा-क्रान्ता वृत्तम् ।

(१) स्पृष्टिका स्पर्शः, भावे क्तिन् ततः स्वार्थे कः, शरीरस्य स्पृष्टिकया देहस्पर्शेन, शापितेन दत्तशपथेनेत्यर्थः । अकालहीनम् उचितकालेन न हीनम्, अश्राद्ध-भोजीत्यादिवत् असमर्थसमासः, अस्मन्मरणश्रवणे तेनाप्यनुमरणं यथा न विधेयं तथा ततः प्रागेवावेदनीयमिति भावः ।

(२) शाखारोधेन शाखाऽऽवरणेन, तद्व्याप्त्येत्यर्थः, स्थगितमाच्छादितं, वसुधा-मण्डलं यस्य, मण्डिता भूषिताः, आशाः दिशो येन, सुसदृशः स्वरूपानुरूपः, महा-मूलस्य पर्यङ्कबन्धः परितोऽङ्कबन्ध आलवालरूपो यस्य ईदृशे, तरौ पाण्डुवंशरूपवृक्षे,

---

(क) हला बुद्धिमतिके ! भण मम वचनेन प्रियसखीं सुभद्रां, वत्साया उत्त-रायाश्चतुर्थो मासः प्रतिपन्नस्य गर्भस्य त्वमेव कुलप्रतिष्ठापकं सावधानं रक्षेति । कदाऽपीतो लोकाद्गतस्य श्वशुरकुलस्यास्माकञ्च सलिलबिन्दुदो भविष्यतीति ।

[ कञ्चुकिनमवलोक्य ]। जयन्धर! अस्मच्छरीरेण शापितोऽसि, तथाऽपि न गम्यते ?।

कञ्चु। [ साक्रन्दम् ]। हा देव पाण्डो! तव सुतानामजातशत्रुभीमार्जुननकुलसहदेवानामयं दारुणः परिणामः!! हा देवि कुन्ति! भोजराजभवनपताके!—

(१) भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविनः
तस्यैवाखिलधार्त्तराष्ट्रनलिनव्यालोलने दन्तिनः।
आचार्य्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा
दग्धं तत् सुतकाननं तव मही यस्याश्रयाच्छीतला॥

[ इति रुदन्निष्क्रान्तः ]।

युधि। जयन्धर! जयन्धर!—

कञ्चुकी। [ प्रविश्य ]। आज्ञापयतु देवः।

युधि। वक्तुमिच्छामि, पुनरेतावन्ति भागधेयानि युष्माकं, यदि कदाचिद्विजयी स्याद्वत्सोऽर्जुनस्तद्वक्तव्योऽस्मद्वचनात् भवता—

---

दैवात् भाग्यवशात्, दग्धे सति छायया अनातपेन, दुःखाभावेनेत्यर्थः, अर्थी अभिलाषी, अयं मादृशः द्रौपदीरूपो वा, जनः अस्मिन् उत्तरागमरूपे, मूलादुद्धृतमपि आशाबन्धं कुरुते प्रनष्टसर्वसम्पत्तिकस्य वृक्षस्याङ्कुरभावे आशाबन्धनमतीवानित्यफलकमिति भावः। मन्दाक्रान्ता वृत्तम्।

(१) ते तव, भ्रातुस्तनयेन, शौरेः कृष्णस्य, गुरुणाऽग्रजेन, गाण्डीविनोऽर्जुनस्य, श्यालेन तस्य सुभद्रापतितया तद्भ्रात्रेत्यर्थः, अखिला धार्त्तराष्ट्रा एव नलिनानि सुखच्छेद्यत्वात्, तेषां व्यालोलने उन्मूलने, दन्तिनः हस्तिरूपस्य, तस्यैव वृकोदरस्यैव आचार्य्येण गुरुणा, हलिना तत् तव सुतकाननं दग्धं, भीमनाशनेनैव सर्वेषामपि नाशनादित्यर्थः, यस्याश्रयान्मही शीतला, एवं जन्मादिसम्बन्धिनामप्येषा तेन हननमत्यन्तानुचितमेवेति व्यञ्जयन् विशिनष्टि, मत्तेन मद्यादिना क्षीबेण, उन्मत्तेन स्वाभाविकोन्मादरोगवता, तथा च मत्तोन्मत्तयोर्न कृत्याकृत्यविवेक इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(१) हतो हेतुः सत्यं भवति मम वत्सस्य निधने
तथाऽप्येष भ्राता सहजसुहृदस्ते मधुरिपोः ।
अतः क्रोधः कार्य्यो न खलु मयि च प्रेम भवता
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्रपदवीम् ॥

कञ्चु। यदाज्ञापयति देवः। [इति निष्क्रान्तः]।

युधि। [अग्निं दृष्ट्वा सहर्षम्]। ननूद्भूतशिखाहस्ताहूतार्त्तिहृदयव्यसनिजनः (२) समिद्धो भगवान् हुताशनः, तत्र इन्धनमात्मानं करिष्ये ।

द्रौप। पसीददु महाराओ मम इमिणा अपच्छिमेण पणएण, अहं एव्व अग्गदो गमिस्सं । (क)

युधि। यद्येवं, सहितावेवाभ्युदयमपि भोक्ष्यावहे ।

चेटी। हा भगवंतो लोअवाला! परित्ताअह सोमवंसवाएसीं, अअं क्खु राआ राअसूअसंतप्पिदहुदवहो खंडवसंतप्पिदहुदवहस्स किरीडिणो जेट्ठो भादा सुगहीदणाम-

(१) सहजसुहृदः स्वाभाविकबान्धवस्य, "आत्मपितुः स्वसुः पुत्रा आत्ममातुः स्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया ह्यात्मबान्धवाः ॥" इति स्मृत्युक्तेः, यथा च पितुः स्वसेवाद्दौना सहजमित्रत्वेऽपि कृष्णस्येव बलभद्रस्यापि तथात्वात् तदनुक्ता कृष्णभ्रातृत्वेनेह कथनं तस्य अतिममित्रत्वद्योतनार्थम्, अथवा नरनारायणरूपयोस्तयोः सहजमित्रत्वम् अनलानिलयोरिव पुराणे प्रसिद्धं, तदेवेह ग्राह्यं, तेन जन्मावधि सुहृदः भवान्तरेऽपि सुहृद इत्यर्थः, क्रोधः, हन्तिमीति शेषः, त्वया न कार्य्यः, यदि मयि प्रेम स्नेहः, तदा वनं गच्छेः, अकरुणां दयाशून्यां, क्षात्रपदवीं क्षत्रियधर्मं युद्धादिकं, मा गाः नावलम्बस्व, तथा च वैराग्यमेवालम्बस्वेत्याशयः । शिखरिणी वृत्तम् ।

(२) उद्भूतशिखेव हस्तेनाहूतोऽर्त्तिहृदयो व्यसनिजनो दुःखिजनो येन ।

(क) प्रसीदतु महाराज, ममानेनापश्चिमेन प्रणयेन, अहमेवाग्रतो गमिष्यामि ।

ट्ठिरो महाराअजुहिट्ठिरो, एसा देवी पंचालराअकुलदेवदा जस्रवेदिमज्झसंभवा जसमेणी. दुवे वि सरीरेण णिक्करुणस्स कालाणलस्स इंधणीहोद, परित्ताअह परित्ताअह। [ तयोरग्रतः पतित्वा ]। किं व्ववसिदं देवीए देवेण अ ?। (क)

युधि। अयि बुद्धिमतिके! यन्नाथेन प्रियानुजेन विना सदृशं, तत् (१)। उत्तिष्ठ, सलिलमुपानय।

चेटी। जं देवो आणवेदि। [ इति निष्क्रम्य पुनः प्रविश्य च ]। जेदु जेदु महाराओ। (ख)

युधि। पाञ्चालि! त्वमपि तावत् स्वपक्षपातिनो वृकोदरस्य प्रियस्यार्जुनस्य (?) उदकक्रियां कुरु।

द्रौप। महाराओ एव्व करेदु, अहं उण ज्जलणं प्पविसिस्सं। (ग)

युधि। अनतिक्रमणीयं लोकवृत्तं, भद्रे! उदकमुपानय।

[ चेटी तथा करोति ]।

युधि। [ पादौ प्रक्षाल्य उपस्पृश्य च ]। एष तावत्

(१) द्रौपद्या नाथेन, मम च प्रियानुजेन विना यत् सदृशं तत् व्यवसितमित्यर्थः।

(क) हा! भगवन्तो लोकपालाः! परित्रायध्वं सोमवंशराजर्षिम्, अयं खलु राजा राजसूयसन्तर्पितहुतवहः खाण्डवसन्तर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः, एषा देवी पाञ्चालराजकुलदेवता यज्ञवेदिमध्यसम्भवा याज्ञसेनी, द्वावपि शरीरेण निष्करुणस्य कालानलस्य इन्धनीभवतः, परित्रायध्वं परित्रायध्वम्। किं व्यवसितं देव्या देवेन च ?।

(ख) यद्देव आज्ञापयति। जयति जयति महाराजः।

(ग) महाराज एव करोतु, अहं पुनर्ज्वलनं प्रवेक्ष्यामि।

सलिलाञ्जलिर्गाङ्गेयाय भीष्माय (१) गुरवे, प्रपितामहाय (१) शान्तनवे, पितामहाय विचित्रवीर्य्याय। [ सास्रम् ]। तात! तवाधुनाऽवसरः, अयमपि तत्रभवते स्वर्गस्थाय गुरवे सुगृहीत-नाम्ने (२) पित्रे पाण्डवे—

(३) अद्य प्रभृति वां दत्तमम्भसो दुर्लभं पुनः।
तात! त्वयाऽम्बया सार्द्धमेतद्दत्तं निपीयताम्॥

(४) एतज्जलं जलजनीलविलोचनाय
भीमाय भोस्तव ममाप्यविभक्तमस्तु।
एकं क्षणन्तु विषहस्व पिपासितोऽपि
पातुं त्वया सह जवादयमागतोऽस्मि॥

अथवा सुक्षत्रियाणां गतिमुपगतं वत्सम् अहं स्तनोऽप्यशक्तो द्रष्टुम्। (५) वत्स भीमसेन!—

---

(१) पितामहस्य विचित्रवीर्य्यस्य ज्येष्ठभ्रातृत्वेन पितृतुल्यत्वात् भीष्मे प्रपितामहत्ववचनं द्रष्टव्यम् (१)।

(२) सुगृहीतनाम्ने प्रातःस्मरणीयाभिधेयाय, "स सुगृहीतनामा स्यात् यः प्रातरनुचिन्त्यते" इत्युक्तेः।

(३) अद्येति।—अद्य प्रभृति अस्मात् क्षणात्, दत्तं पयः, वां युवयोः, पुनः दुर्लभं दुष्प्रापं, हे तात। त्वया अम्बया मात्रा सह, एतत् दत्तं, पय इति शेषः, निपीयताम्। पथ्यावक्त्रं वृत्तम्।

(४) एतदिति।—भो भ्रातः! जलजं नीलपद्मं, तद्वत् नीले विलोचने यस्य तादृशाय, भीमाय, तुभ्यमिति शेषः, एतत् जलं तव ममापि अविभक्तम् अस्तु तिष्ठतु, त्वं पिपासितोऽपि तृषार्त्तोऽपि, एकं क्षणं विषहस्व प्रतीक्षस्व, अयमहं त्वया सह पातुं जवात् वेगात्, सत्वरमित्यर्थः, आगतोऽस्मि। वसन्ततिलकं वृत्तम्।

(५) अहं स्तनोऽपि तन्मात्रादनुस्तोऽपि, युद्धहतं वत्सं द्रष्टुमशक्तो न समर्थः, तस्य युद्धमरणेन क्षत्रलोकावाप्तेर्मम चात्मनामरणेन न तत्स्थानप्राप्तिरिति भावः।

(१) मया पीतं पीतं तदनु भवताऽम्बास्तनयुगं
　　मदुच्छिष्टैर्वृत्तिं जनयसि रसैर्वत्सलतया।
　　वितानेष्वप्येवं तव मम च सोमे विधिरभूत्
　　निवापाम्भः पूर्वं पिबसि कथमेवं त्वमधुना ?॥

कृष्णे ! देहि जलाञ्जलिं तत्रभवते भीमाय।

द्रौप। हंजे बुद्धिमदिए ! देहि मे उदअम्। (क)

[ चेटी तथा करोति ]।

द्रौप। [ उपसृत्य जलाञ्जलिं पूरयित्वा ]। कस्स जलं देह्मि ?। (ख)

युधि। (२) तस्मै देहि जलं पूर्वं सहसा गच्छते दिवम्।
　　अम्बाऽपि येन गान्धार्य्या रुदितेन समीकृता॥

द्रौप। णाह ! परिजणोवणीदं सग्गगदस्स पादोदअं भविस्सदि एदम्। (ग)

युधि। फाल्गुनाग्रज !—

(३) असमाप्तप्रतिज्ञेऽपि याते त्वयि ममानुजे।

---

(१) वितानेषु अग्न्याधानादिषु, सोमे सोमयागे, एवं सर्वत्र आवयोः पूर्वापरीभूतो विधिरभूत्, अधुना त्वं निवापाम्भः तर्पणजलं, पूर्वं पिबसि ? मामतिक्रम्य तज्जलपानं तवानुचितमित्यर्थः। शिखरिणी वृत्तम्।

(२) तस्मै इति।—सहसा दिवं स्वर्गं, गच्छते तस्मै भीमाय, पूर्वं जलं देहि, येन भीमेन, अम्बाऽपि माताऽपि, रुदितेन रोदनेन, गान्धार्य्या समीकृता तुल्यतां नीता, गान्धारी यथा पुत्रशोकेन रोदिति तथा माता कुन्ती अपि तत्पुत्रशोकेनेति तात्पर्य्यम्। पथ्यावक्त्र वृत्तम्।

(३) असमाप्तेति।—असमाप्तप्रतिज्ञे अपूर्णप्रतिज्ञे, मम अनुजे त्वयि याते,

---

(क) हञ्जे बुद्धिमतिके ! देहि मे उदकम्।

(ख) कस्य जलं दास्यामि ?।

(ग) नाथ ! परिजनोपनीतं स्वर्गगतस्य पादोदकं भविष्यत्येतत्।

मुक्तकेश्यैव ते दत्तः प्रियया सलिलाञ्जलिः ॥

द्रौप। उट्ठेहि महाराअ! दूरं गच्छदि दे भादा। (क)

युधि। [ दक्षिणाक्षिस्पन्दनं सूचयित्वा ]। पाञ्चालि! निमित्तानि मे कथयन्ति सम्भावयसि वृकोदरमिति, भवतु, शीघ्रं दहनमुपसर्पावः।

द्रौप। आः! प्पज्जलिदो भअवं हुदवहो। (ख)

[ नेपथ्ये कलकलः ]।

कञ्चुकी। [ सम्भ्रान्तः प्रविश्य ]। परित्रायतां परित्रायतां महाराजः; एष खलु दुरात्मा कौरवापसदः क्षतजाभिषेक-पाटलीकृताम्बरो रक्तभीषणगदापाणिः उद्यतकालदण्ड इवान्तकोऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत एवाभिवर्त्तते।

युधि। हा देव! तेन निर्णयो जातः। हा गाण्डीवधन्वन्! [ इति मुह्यति ]।

द्रौप। हा अज्जउत्त! मम सअंवरसअंगहकुटुंब! धणंजअ! प्पिअं भादुअं संभावेसि ण उण महाराअं इमं दासजणं अ। (ग) [ इति मोहमुपागता ]।

युधि। हा असहायमल्ल! हा निवातकवचोद्धरण-

देवमिति शेषः, प्रियया द्रौपद्या, मुक्तकेश्या असंयमितकेश्या एव, ते तुभ्यं, सलिलाञ्जलिः दत्तः। पथ्यावक्त्रं वृत्तम्।

(क) उत्तिष्ठ महाराज! दूरं गच्छति ते भ्राता।

(ख) आः! प्रज्वलितो भगवान् हुतवहः।

(ग) हा आर्य्यपुत्र! मम स्वयंवरलब्धकुटुम्ब! धनञ्जय! प्रियं भ्रातरं सम्भावयसि न पुनर्महाराजमिमं दासजनञ्च।

निष्कण्टकीकृतामरलोक ! (१) हा बदर्य्याश्रममुनिद्वितीयतापस ! (२) हा द्रोणाचार्य्यप्रियशिष्य ! हा अस्त्रशिक्षाबलपरितोषितगाङ्गेय ! हा राधेयकुलकमलिनीप्रालेयवर्ष ! हा गन्धर्वनिर्वासितदुर्य्योधन ! (३) हा पाण्डवकुलकमलिनीराजहंस !—

(४) तां वत्सलामनभिवन्द्य विनीतमम्बां
गाढञ्च मामनुपगुह्य मयाऽप्यनुक्तः ।
एतां स्वयंवरवधूं सहभीमपृष्ट्वा
दीर्घप्रवासमपि वत्स ! कथं गतोऽसि ? ॥

[ इति मोहमुपागतः ] ।

कञ्चु । भोः कष्टम् ॥ एष दुरात्मा सुयोधनो यथेष्टमित एवाभिवर्त्तते, सर्वथा अयमत्र कालोचितः प्रतीकारः, भद्रे बुद्धिमतिके ! चितासमीपमुपनयात्रभवतीं पाञ्चालराजतनयाम् । [ चेटीं प्रति ] । भद्रे ! त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वा ब्रूहि । अथवा एवमेव स्थिते महाराजे अस्तमितयोः भीमार्जुनयोः क्व नु परित्राणम् ? ।

(१) इन्द्रलोकगतेनार्जुनेन सुरारिनिवातकवचादिवधकथा वनपर्वणि १७० अध्याये अनुसन्धेया ।

(२) द्वितीयतापस ! नरनारायणयोस्तत्र तपश्चरणात् तयोर्द्वितीय नररूप ! तपस्विन् ! भूभारहरणाय तयोरेव क्षितितले कृष्णार्जुनरूपाभ्यामाविर्भाव इति भारतीया कथाऽनुसन्धेया ।

(३) गन्धर्वान् चित्ररथात्, निर्वासितः परिमोचितः, दुर्य्योधनो येन तत्सम्बुद्धौ । गन्धर्वात् दुर्य्योधनमोक्षकथा च वनपर्वणि घोषयात्रापर्वणि २४४ अध्याये अनुसन्धेया ।

(४) वत्सलां स्निग्धां, तामम्बां मातरं, विनीतं यथा तथा नमस्कृत्येत्यर्थः, अनभिवन्द्य, माञ्च वत्सलामिति विपरिणामेनान्वयितव्यं, गाढं यथा तथा अनुपगुह्य अनालिङ्ग्य, मया ऽनुक्तश्च तव ज्येष्ठभ्रातृत्वेन मयाज्ञां विनाऽपि, सत्कृत्य दीर्घप्रवासमनभ्यनुज्ञातमनुष्ठितमित्यर्थः । वसन्ततिलकं वृत्तम् ।

[ नेपथ्ये कलकलानन्तरम् ]। भो: भो: समन्तपञ्चक-सञ्चारिण: ! क्षतजासवमत्तयक्षराक्षसपिशाचभूतवेतालकङ्क-गृध्रजम्बूकोलूकवायसभूयिष्ठावशिष्टविरलाश्च योधा: ! कृतं महद्दर्शनसन्त्रासेन, कथय, कस्मिन्नुद्देशे याज्ञसेनी सन्निहिता ? किम् ? कथयामि तस्या लक्षणम्—

(१) ऊरू करेण परिघट्टयत: सलीलं
दुर्य्योधनस्य पुरतोऽपहृताम्बरा या।
दु:शासनस्य करकर्षणभिन्नमौलि:
सा द्रौपदी कथयत क्व पुन: प्रदेशे ? ॥

कञ्चु। देवि याज्ञसेनि! परिभूयसे सम्प्रत्यनाथा कुरुकुलकलङ्केन।

युधि। [ सहसोत्थाय ]। पाञ्चालि! न भेतव्यं न भेतव्यम्। क: कोऽत्र भो: !? उपनीयतां मे सज्जं धनु:। दुरात्मन्! दुर्य्योधनहतक! आगच्छ, अपनयामि ते गदाकौशलसम्भृतं भुजदर्पं शिलीमुखासारेण। अन्यच्च रे कुरुकुलाङ्गार !—

(२) प्रियमनुजमपश्यंस्तं जरासन्धशत्रुं
कुपितहरकिरातद्वेषिणं तञ्च वत्सम्।
त्वमिव कठिनचेता: प्राणितुं नास्मि शक्तो
न च पुनरपहर्त्तुं बाणवर्षैस्तवासून् ? ॥

---

(१) सलीलम् सह लीलयेति वर्त्तमानं यथा तथा, करेण ऊरू सक्थिनी, परिघट्टयत: आस्फालयत:, सुयोधनस्य पुरतो याऽपहृताम्बरा, दु:शासनस्य करकर्षणेन हस्ताकर्षणेन, भिन्न: विश्लेषित:, मौलि: कबरीबन्धो यस्या: तादृशी, द्रौपदी पुन: क्व कुत्र, प्रदेशे स्थाने ? तत् कथयत। वसन्ततिलकं वृत्तम्।

(२) कुपितहर एव किरात: व्याधरूप:, तस्य द्वेषिणा तेन सह कृतयुद्धं, तपसा तोषितो हरो व्याधरूपेणार्जुनेन सह बाहुयुद्धं कृत्वा तेनापि तुष्ट: पाशुपतास्त्रं ददाविति वनपर्वीया ३९ अध्यायस्था कथाऽत्रानुसन्धेया, अथवा; स कु-

[ ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः ]।

भीम। [ उद्धतं परिक्रामन् ]। भो भोः समन्तपञ्चकसञ्चारिणः सैनिकाः ! कोऽयमावेगः ?—

(१) नाहं रक्षो न भूतो रिपुरुधिरजलप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि।
भो भो राजन्यवीराः ! समरशिखिशिखादग्धशेषाः ! कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते किम् ? ॥

कथयन्तु भवन्तः, कस्मिन्नुद्देशे पाञ्चाली तिष्ठति ?।

कञ्चु। देवि पाण्डुस्नुषे ! उत्तिष्ठोत्तिष्ठ, सम्प्रति चिताप्रवेश एव श्रेयान्।

द्रौप। [ सहसोत्थाय ]। कहं ण संभावेमि अज्ज वि चिदासमीवम् ?। (क)

युधि। कः कोऽत्र भोः !? सनिषङ्गं धनुरुपनय। कथम् !! न

तु प्रासनमरणेऽपि भवान् जीवति, नैवं प्राणितुमहं शक्तः, तव प्राणपरित्यागे हेतुगर्भविशेषणम्, क्रूरचेताः वात्सल्यरहितचित्तः, तथाच्चाप्रामस्त्विति (?) भावः, एवं जीवनाशक्तोऽपि तवासून् अपहर्तुमवधारयितुं, न शक्त इति न, किन्तु शक्त एवेत्यर्थः। मालिनी वृत्तम्।

(१) नाहं रक्षो राक्षसः, नापि भूतः पिशाचः, किन्तु प्रकामं यथेष्टं, रिपुरुधिरमेव जलं तेन प्लाविताङ्गः संसिक्तदेहः, निस्तीर्णः पारं गतः, ऊरुप्रतिज्ञैव गुरुप्रतिज्ञैव, जलनिधिगहनः समुद्ररूपदुर्गमप्रदेशो येन तादृशः, क्षत्रियोऽस्मि, समर एव शिखिशिखा वह्निशिखा, सर्वनाशकत्वात्, तया दग्धेभ्यः नाशितेभ्यः, शेषाः अवशिष्टाः, हे राजन्यवीराः। वो युष्माकम्, अनेन त्रासेन भीत्या, कृतं त्रासशाध्यं नास्तीत्यर्थः, तेषां त्रासमेव द्योतयति, किं कस्मात् हेतोः, हतकरितुरगान्तर्हितैः युष्माभिरास्यते ? स्थीयते ? तथा च त्रासकारणाभावेन त्रासो न कर्तव्य इत्यर्थः। स्रग्धरा वृत्तम्।

(क) कथं न सम्भावयाम्यद्यापि चितासमीपम् ?।

कश्चित् परिजन: !! भवतु, बाहुयुद्धेनैव दुरात्मानं गाढ़मालिङ्ग्य ज्वलनमभिपातयामि। [ इति परिकरं बध्नाति ]।

कञ्चु। संयम्यन्तामिदानीं नयनोपरोधिनो दुःशासनावकृष्टा मूर्द्धजा:, अस्तमिता सम्प्रति प्रतीकाराशा, चितासमीपमेव द्रुततरं सम्भावय।

युधि। न खल्वनिहते तस्मिन् दुर्य्योधनहतके संहर्त्तव्या: केशा:।

भीम। पाञ्चालि! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणी आत्मपाणिभ्याम्। [ * ]

द्रौप। [ भयात् परिक्रामति ]।

भीम। तिष्ठ तिष्ठ भीरु! क्वाधुना गम्यते?। [ इति केशेषु ग्रहीतुमिच्छति ]।

युधि। [ बलाद्भीममालिङ्ग्य ]। दुरात्मन्! भीमार्जुनशत्रो! दुर्य्योधनहतक! क्वेदानीं यास्यसि?—

(१) आशैशवादनुदिनं जनितापराधः
    चौरो मदेन भुजयोर्हतराजपुत्र!।
    आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य
    जीवन् प्रयासि न पदात् पदमद्य पाप!॥

---

(१) आशैशवादिति।—रे पाप। इतौ राजपुत्रौ भीमार्जुनौ दैव तथाभूत: अयमग्रतो, अथवा दुष्टागतमथ! आशैशवात् बाल्यात् प्रभृति, अनुदिनं प्रतिदिनं, जनितापराध: कृतापराध:, भुजयोर्मदेन बाहुबलदर्पेण, चौर: मत्त:, मे मम, भुजपञ्जरस्य इदम् अन्तर मध्यम्, आसाद्य प्राप्य, अद्य जीवन् पदात् पदमपि एकमपि पदमित्यर्थ:, न यासि न यातुं शक्नोषि। वसन्ततिलकं वृत्तम्।

---

* [ तिष्ठ तिष्ठ, पदमेव संहरामि ] क्वचिदधिक: पाठ:।

भीम। अये! कथमार्य्यः सुयोधनशङ्कया निर्दयं मामालिङ्गति!! आर्य्य! प्रसीद प्रसीद।

कञ्चु। [निरूप्य सहर्षम्]। कथम्!! कुमारो भीमसेनः!! दिष्ट्या वर्द्धसे महाराज! अयं खल्वायुष्मान् भीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीराम्बरो दुर्लक्ष्यव्यक्तिः, अलमधुना सन्देहेन।

चेटी। [द्रौपदीमालिङ्ग्य]। भट्टिणि! एस क्खु पूरिदप्पडिण्णाभरो णाहो देवीए वेणीसंहारं कादुं तुमं अण्णेसेदि। (क)

द्रौप। हंजे! किं मं अलीअवअणेहिं आस्सासेसि?। (ख)

युधि। जयन्धर! अपि सत्यं, नायं मम वैरी सुयोधनहतकः?।

भीम। देव! अजातशत्रो! भीमार्जुनगुरो! कुतोऽद्यापि सुयोधनहतकः? मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविणः,—

(१) भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनं भीमगात्रे
लक्ष्मीरार्य्ये निषण्णा चतुरुदधिपयःसीमया सार्द्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यत् ब्रवीषि क्षितिप! तदधुना धार्त्तराष्ट्रस्य शेषम्॥

---

(१) धार्त्तराष्ट्रस्य शरीरं भूमौ क्षिप्तं भूमिसात् कृतमित्यर्थः, तस्य असृक्चन्दनं रक्तचन्दनानुलेपनं, भीमगात्रे ममाङ्गके देहे, निहितं, तस्य भृत्याः दासाः, मित्राणि बान्धवाः, योधाः भटाः, निखिलं कुरुकुलञ्च एतत् एतानि, रणाग्नौ युद्धवह्नौ, दग्धं दग्धानि, "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" (१।२।६९ पा० सू०) इति

---

(क) भट्टिनि! एष खलु पूरितप्रतिज्ञाभारो नाथो देव्या वेणीसंहारं कर्त्तुं त्वामन्वेषयति।

(ख) हञ्जे! किं मामलीकवचनैराश्वासयसि?।

युधि। [भीममवलोकयन् अश्रूणि प्रमार्जयति]।

भीम। [पादयोः पतित्वा]। जयत्वार्य्यः।

युधि। वत्स! बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम्। कथय, कच्चिज्जीवति भवान् समं किरीटिना?।

भीम। निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमोऽर्जुनश्च।

युधि। [सस्नेहं पुनर्गाढ़मालिङ्ग्य]।

(१) रिपोरास्तां तावन्निधनमिदमाख्याहि शतशः
प्रियो भ्राता भीमो मम भवसि योऽसौ वकरिपुः?।

भीम। आर्य्य! सोऽहम्।

युधि। जरासन्धस्योरःसरसि रुधिरासारसलिले
तटाघातक्रीडाललितमकरः संयति भवान्?॥

भीम। आर्य्य! मुञ्चतु मां क्षणमेकं भवान्।

युधि। किमपरमवशिष्टम्?।

भीम। आर्य्य! सुमहदवशिष्टं, संयच्छामि तावदनेन दुर्य्योधनदुःशासनरुधिरोक्षितेन पाणिना पाञ्चाल्या दुःशासनाकृष्टं केशहस्तम्।

युधि। सत्वरं गच्छतु भवान्, अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम्।

---

नपुंसकैकशेषः, विभाषया एकवचनञ्च। नामैक नामैव, शेषं, तेन नरस्य सूचितत्वात् द्रष्टव्यम्। स्रग्धरा वृत्तम्।

(१) रिपाविति।—रिपौ शत्रौ, निधनम् आस्ताम् तिष्ठतु, तावत् तत्कथया अलमित्यर्थः, इदं शतशः बहुशः, पुनः पुनरित्यर्थः, आख्याहि कथय, योऽसौ मम प्रियः भ्राता वकरिपुः भीमः, स त्वं भवसि? रुधिरासारसलिले रक्तप्रवाहरूपजले, उरःसरसि उरःसरोवररूपायां, संयति तटाघातक्रीडाललितमकरः तटाघातः उच्चैर्देशकं शृङ्गनखादिभिर्मृदाद्युत्खननं, स एव क्रीडा तया ललितो मनोहरः; मकरः जलजन्तुविशेषरूपः, भवान्?। शिखरिणी वृत्तम्।

भीम। भवति पञ्चालराजतनये! दिष्ट्या वर्द्धसे रिपुकुलक्षयेण।

द्रौप। [उपसृत्य]। जेदु जेदु णाहो। (क) [इति भयादपसर्पति]।

भीम। राजपुत्रि! अलमेवं मामालोक्य त्रासेन, पश्य—

(१) येनाकृष्टाऽसि राज्ञां सदसि नृपशुना तेन दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि।
कान्ते! राज्ञः कुरूणामपि रुधिरमिदं मद्गदाचूर्णितोरो-
रङ्गेष्वङ्गेषु सक्तं तव परिभवजस्यानलस्योपशान्त्यै॥

बुद्धिमतिके! क्व सम्प्रति भानुमती योपहसति पाण्डव-दारान्? भवति वेदिमध्ये! याज्ञसेनि!।

द्रौप। आणवेदु णाहो। (ख)

भीम। स्मरति भवती, यन्मयोक्तम्? चञ्चद्भुजेति [पूर्वोक्तमेव पठति]।

द्रौप। णाह! सुमरामि, अणुहवामि अ। (ग)

भीम। भवति! संयम्यतामिदानीं धार्त्तराष्ट्रकुलकाल-रात्रिर्दुःशासनविलुलिता वेणी।

(१) येनेति।—येन नृपशुना नराधमेनेत्यर्थः, दुःशासनेन राज्ञां सदसि सभायाम्, आकृष्टाऽसि आकृष्य नीताऽसि, मम करयोः तस्य पीतशेषाणि पीतावशिष्टानि, स्त्यानानि घनानि, एतानि असृञ्जि रक्तानि, स्पृश, हे कान्ते। मम गदाभिः चूर्णितोरोः भग्नोरोः, कुरूणां राज्ञः अपि इदं रुधिरं तव अङ्गेषु अङ्गेषु सक्तं सत् परिभवजस्य अवमानजातस्य, अनलस्य अग्नेः, उपशान्त्यै उपशमाय, भवतीति शेषः। स्रग्धरा वृत्तम्।

(क) जयति जयति नाथः। "जेदुवन्त् तिवन्तौ" इत्युक्तेः तुपविप्।

(ख) आज्ञापयतु नाथः।

(ग) नाथ! स्मरामि, अनुभवामि च।

द्रौप। णाह! विसुमरिदह्मि एदं व्वावारं, णाहस्स प्पसादेण पुणोवि सिक्खिस्सं। (क)

[ चेटी वेणीं बध्नाति ]।

[ नेपथ्ये ] (१)—

क्रोधान्धैर्यस्य मोचात् कुरुनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यतुलभुजबलैः पार्थिवान्तःपुराणि।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
सोऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः॥

युधि। देवि! एष ते वेणीसंहारोऽभिनन्द्यते नभस्तलसञ्चारिणा सिद्धजनेन।

[ ततः प्रविशतो वासुदेवार्जुनौ ]।

वासु। [ उपगम्य ]। विजयतां निहतसकलारातिमण्डलः सानुजः पाण्डवकुलचन्द्रमा महाराजो युधिष्ठिरः।

अर्जु। जयत्यार्य्यः।

युधि। [ विलोक्य ]। अये! कथं भगवान् वासुदेवः किरीटी च!! भगवन्! अभिवादये। [ किरीटिनं प्रति ]। एह्येहि वत्स! परिष्वजस्व माम्।

अर्जु। [ प्रणमति ]।

युधि। [ वासुदेवं प्रति ]। देव! कुतस्तस्य विजयादन्यत् यस्य खलु भगवान् पुण्डरीकाक्षः स्वयं मङ्गलमाशास्ते?।

(१) यस्य कृष्णायाः केशपाशस्य, मोचात् अतुलभुजबलैः कुरुपाण्डवनरपतिभिः प्रत्याशं सर्वासु दिक्षु, नरपतीनामन्तःपुराणि तत्स्थाबलाजना इत्यर्थः, मुक्तकेशानि कृतानि, कुपितमृत्युतुल्यः, धूमकेतुः, निखिलोत्पातहेतुत्वात् कृष्णत्वाच्च, सोऽयं कृष्णायाः केशपाशः बद्धः, इदानीं प्रजानां निधनं विरमतु, राज्ञां कुलेभ्यश्च स्वस्ति कुशलमस्तु। स्रग्धरा वृत्तम्।

(क) नाथ! विस्मृताऽस्मि एतं व्यापारं, नाथस्य प्रसादेन पुनरपि शिक्षिष्यामि।

(१) कृतगुरुमहदादिक्षोभसम्भूतमूर्त्तिं
गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।
अजमजरमचिन्त्यं चिन्तयित्वा भवन्तं
भवति जगददुःखं किं पुनर्देव ! दृष्ट्वा ? ॥

[ अर्जुनमालिङ्ग्य ]। वत्स ! परिष्वजस्व माम् ।

वासु। एते खलु भगवन्तो व्यासवाल्मीकिजामदग्न्य-जावालिप्रभृतयो महर्षयः कल्पिताभिषेकमङ्गला नकुलसहदेव-सात्यकिमुखाश्च सेनापतयो यादवमत्स्यमागधकुलसम्भवाश्च राजकुमाराः स्कन्धोत्तम्भिततीर्थवारिकलसास्तवाभिषेकं धार-यन्ति । अहमपि चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह सत्वरमागतः ।

युधि। किं नाम !! चार्वाकेण विप्रलब्धा वयम् !! [ सरोषम् ]। क्वासौ धार्त्तराष्ट्रसखः पुण्यजनापसदः ? येन मे महांश्चित्तविभ्रमः कृतः ।

वासु। गृहीतः स दुरात्मा नकुलेन । कथय महाराज ! किमस्मात् परं ममोहितम् ? ।

(१) देव ! हे सर्वप्रकाशक ! कृताः स्वपरिणामेनोत्पादिताः, गुरवः स्थूलभूतानि पृथिव्यादीनि, महदादयश्च येन तादृशस्याव्यक्तस्य प्रधानस्य, क्षोभेण सृष्ट्युन्मुखप्रवृत्त्या, सम्भृता मूर्त्तिर्यस्य तथाविधं, गुणिनं सत्त्वरजस्तमोरूपगुणत्रयोपाधिकं, गुणत्रयोपाधिकत्वे प्रयोजनमाह, प्रजानां लोकानाम्, उदयः उद्भवः, नाशः संहारः, स्थानं स्थितिः, पालनमित्यर्थः, तेषां हेतुभूतं, तथा च जन्मस्थितिप्रलयार्थमेव गुणत्रयोपाधिकत्वमिति भावः, न जायते इत्यजमुत्पत्तिशून्यम्, अजरं नाशशून्यं, तथा च क्षयोदयरहितत्वात् नित्यमित्यर्थः, अचिन्त्यम् ईदृक्तया निश्चेतुमशक्यम्, अतद्व्यावृत्त्यैव बोध्यमिति यावत्, एवम्भूतं भवन्तं चिन्तयित्वा ध्यानप्रवाहेण संस्मृत्यापि, जगत् विश्वस्था जनाः, अदुःखम् आध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रयरहितं, भवति ॥ "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । प्रकृतेः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥" इति श्रुतेः, किं पुनर्दृष्ट्वा ? भवन्तं साक्षात्कृत्य ? ॥ मालिनी वृत्तम् ।

युधि०। भगवन्! [* पुण्डरीकाक्ष! किं न ददाति प्रसन्नः?] परमपि प्रियमस्ति? अहन्तु पुरुषसाधारणया बुद्ध्या सन्तुष्यामि, न खल्वतः परमर्थयितुं क्षमः। पश्यतु देवः,—

(१) क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नये पतितया तीर्णो निकारार्णवः।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
किं नामान्यदतः परं प्रियतरं यत् प्रार्थये त्वामहम्?॥

तथाऽपि प्रीतश्चेद्भगवांस्तदिदमस्तु—

(२) अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं
भवतु च भवद्भक्तिर्द्वैधं विना पुरुषोत्तम!।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवित्
सततसुकृती भूयात् भूपः प्रसादितमण्डलः॥

वासु०। एवमस्तु। [इति निष्क्रान्ताः सर्वे]।

इति षष्ठोऽङ्कः।

इति महाकविश्रीभट्टनारायणविरचितं वेणीसंहारनामनाटकं समाप्तम्।

---

(१) क्रोधान्धैरिति।—क्रोधान्धैः, अस्माभिरिति शेषः सकलं रिपुकुलं हतं नाशितं, ते वयं पञ्च भ्रातरः, अक्षताः अनष्टाः, मम दुर्नये दुराचारे, पतितया पाञ्चाल्या द्रौपद्या, निकारार्णवः परिभवसागरः, तीर्णः, पुरुषोत्तम पुरुषश्रेष्ठः, देवस्त्वम् आदृतः आदरवान् सन्, मां सुकृतिनं पुण्यवन्तं, भाषसे कथयसि, अतः परं किं नाम अन्यत् परं श्रेष्ठं, महदित्यर्थः, प्रियतरम् अतिशयप्रियम्, अस्तीति शेषः, यत् अहं त्वां प्रार्थये? याचे? अतः परं किमपि प्रियं नास्तीति भावः। शार्दूलविक्रीडितं वृत्तम्।

(२) पुरुषायुषं पुरुषस्यायुःकालं व्याप्य, पुरुषस्यायुः जीवितकालः "शतायुर्वै पुरुषः" इति श्रुतेः शतवर्षमित्यर्थः, "अचतुर—" (५।४।७७ पा० सू०) इत्यादिना निपातनात् सिद्धम्, हे पुरुषोत्तम! द्वैधं संशयं, विना भवद्भक्तिः भवति त्वयि, भक्तिः परमप्रेमानुरागः, भवतु, गुणेषु विशेषवित् गुणविवेकी, विद्वद्बन्धुर्भूयात्, भूपः सततसुकृती सततशुभकारी भूयादित्यर्थः। हरिणी वृत्तम्।

इति महामहोपाध्यायकालिदाससार्वभौमभट्टाचार्यात्मजसम्पन्नश्रीतारानाथतर्कवाच-स्पतिभट्टाचार्यविरचिते वेणीसंहारव्याख्याने वेणीसंहारनामक-षष्ठाङ्कव्याख्या।

---

* [एवं पुण्डरीकाक्ष! न किञ्चित् न ददाति भगवान् प्रसन्नः?] इत्यपि पाठः।